अथ प्रौढा(?)-धीराधीरा- लक्षणम् ।

प्रिगतुज्णाल्त यस्याः परुषं वचनं मुखे ।
इक्षुवन्मधुरा या च धीराधीरा हि सा मता ॥७४॥*

अथ प्रौढा(?)-धीराधीरा-वर्णनम् ।

हृन्म्लानोऽसि[114] न किञ्चिदीरय हासोक्त रुक्तिमुज्भ्या(?)धुना-[115]
स्त्यन्यस्यां[116] रसराशिरेव रचितस्तद्वादमात्र[117] मयि ।
चक्षुः सङ्कुचितं प्रियालसतयादर्शे सकृद् दृश्यताम्
ईदृग्वेश इहागतोऽद्य शपथं त्वं व्यस्मरः श्वस्तनम् ॥७५॥†

अथ परकीया-लक्षणम् ।

[118]या प्रिया स्याच्च जगति प्रसिद्धा सर्वतः परा ।
परकीया भवेत् सा हि कथिता रसकोविदैः ॥७६॥§(?)

अथ परकीयाभेद-कथनम् ।

परकीया द्विधैका स्यादूढानूढा तथापरा ।
मूढाः स्युः सन्ततं सर्वे[119]ऽमूढा यत्(च्छ्रु?) श्रुतिदर्शनैः ॥७७॥‡

114. हृदान्तःकरणेन म्लानो मलिनोऽसि ।
115. हासोक्तिमुज्भाधुनेति साधुः पाठः ।
116. अन्यस्यामपरायां नायिकायाम् ।
117. तद्वादः = रसवादः प्रेमकलह इति भावः ।
118. रसिकप्रिया-विलक्षण-लक्षणमिदं, केवलं गौडीयवैष्णवरसतत्त्वे संभाव्यते ।
119. अमूढाः = विद्वांसः ।

* तुलनीयः, रसिकप्रिया—३-६५
† ,, ,, ३-६६
§ ,, ,, ३-६७
‡ ,, ,, ३-६८

अथोढानूढा-लक्षणम् ।

ऊढा विवाहितैव स्यादनूढा चाविवाहिता ।
गूढागूढं तयोः सर्वं विलासं समुदीरयेत् ॥७८॥*

अथोढा-वर्णनम् ।

किलोपविष्टालिसभासु शोभते
वसत्यसौ सर्वदृगन्तरेषु च ।
वचः कथञ्चिद् ब्रुवती वहूदिता
मनो मनस्येव हसत्यविस्फुटम् ॥७६॥†

अपिच ।

खेलामिहैयमपि खेलति तत्र कान्त-[120]
हृत् खेलयत्यपि विलासवती दृशञ्च ।
नो को(ऽ)पि वेद च कदाक्षि पथा हि केन
स्पृष्ट्वा विनिःसरति कृष्णमुखं [121]प्रधावत् ॥८०॥§

अथानूढा-वर्णनम् ।

गोपीमध्यगता विभूष्य सुभगा राधोपविष्टा स्थिता
खेलत्यत्र सखी च चाब्विह विधौ गाढानुरागाप्यसौ ।

120. नायक-मानसमिति भावः ।
121. अस्या अक्षि कदा केन पथा प्रधावत् कृष्णमुखं स्पृष्ट्वा निःसरतीति भावः

* तुलनीयः, रसिकप्रिया—३-६९
† ,, ,, ३-७०
§ ,, ,, ३-७०

पश्चात् कृष्णवचो निशम्य कलयद्बधूच्चातुरी(?) कातुरा[122]
[123]नावैत् कापि च तद्धरिस्वरपथं[124] लग्नाम्बुजाक्षीह[125] यत् ॥८१॥*

तन्नायकानां संवर्ण्य नायिका(स्त?)तद्विलोकनम् ।
प्रच्छन्नश्च प्रकाशश्च वर्ण्यते तन्निशामय ॥८२॥†

इति श्रीमन्महाराज-रामजीवनराय-महाशयादिष्ट-श्रीमधुसूदन-कवीन्द्रविरचितायां रसचन्द्रिकायां स्वकीया-परकीया-भेदकथनं नाम तृतीय आलोकः ॥

---

122. कृष्ण-मिलनायातुरतां गतेति भावः ।
123. नावगच्छत् ।
124. कृष्णकण्ठस्वरपथम् ।
125. इहाम्बुजाक्षी लग्नेत्यन्वयः ।

---

* तुलनीयः, रसिकप्रिया—३-७१
† ,, ,, ३-७४

# रसचन्द्रिका

## [ चतुर्थ आलोकः ]

अथ दर्शनरसलक्षणम् ।

दर्शनेन भवेद्येन सकामं मिथुनं मिथः ।
वर्ण्यते रसिकैर्धीरै दर्शनं तच्चतुर्विधम् ॥१॥*

साक्षाद्दर्शनमेकं च द्वितीयं चित्रितेक्षणम् ।
स्वप्नेक्षणं तृतीयञ्च तुरीयं श्रुतिसम्भवम् ॥२॥†

अथ साक्षाद्दर्शनावस्था-कथनम् ।

निद्रा क्षुधा वपुःकान्ति[1] र्यान्ति यच्छ्रवणेन हि ।
तदालोकनतो यत्तु[2] भवेज्जानाति को हि तत् ॥३॥§

अथ राधाप्रच्छन्नसाक्षाद्दर्शनम् ।

वेशं सर्ववरं विधाय हि हरिं राधेक्षते सादरं
वर्षन्तीव मनोभवेषुमिह यत् कर्हीक्षते दर्पणे ।
वक्त्रं तत् सुषमोपमं स्पृशति तज्जाने हि संगोपयन्
नात्मानं रविमण्डले शशधरः[3] सानन्दमालोकते ॥४॥‡

---

1. वपुषः कान्तिः ।
2. यदनिर्वचनीयं सुखम् ।
3. अत्र रविमण्डलं = दर्पणम्, शशधरः = नायिकामुखचन्द्रः ।

---

* तुलनीयः, रसिकप्रिया—४-१
† ,, ,, ४-२
§ ,, ,, ४-३
‡ ,, ,, ४-४

अथ राधाप्रकाश-साक्षाद्दर्शनम् ।

आदौ समीक्ष्य मुकुरं मुमुचेऽलसत्वं
चैकां घटीमपनिनाय विघृष्य चन्द्रम्[4] ।
अभ्यज्य[5] पुष्परसतोऽपि सुगन्धितैलै-
र्म्मर्म्मार्ज(?) गात्रमपि गात्रमृजांशुकेन ॥५॥*

मार्ष्टि स्म गात्रमपि [6]मेदजयादिगन्ध-
द्रव्येण साञ्जनदृशोः पुनरञ्जनञ्च ।
दत्तं सुगोप्य कलयामि किमीक्षितास्मि,
लग्ना पुन र्नयनयोः [7]सखि मे त्रपास्ते ॥६॥†

अथ श्रीकृष्णप्रच्छन्नसाक्षाद्दर्शनम् ।

भाले [8]लोहितपट्टसूत्रकलित(तां?)मुक्तावलीं लोकते
धृत्वैकाम्बुजलोचनालसतयादर्शं[9] सहर्षं करे ।
कृष्णेनोपमितिः सुचारुमतिना गुप्तेन सन्दर्श्यते
भास्वद्बिम्ब[10] इवेन्दुबिम्ब-निपतन्त्येषा त्रिवेणी त्विति[11] ॥७॥‡

4. कर्पूरं चन्दनं वा, चन्द्रद्युतिरित्यपरपर्यायः इति भावप्रकाशे ।
5. अभ्यज्य = आसिच्य ।
6. कस्तूरीजयन्त्यादिभिः ।
7. मे नयनयोः त्रपा लग्ना आस्ते ।
8. लोहितपट्टसूत्रकलितामिति मुक्तावलीमित्यस्य विशेषणम् ।
9. काचिदम्बुजलोचना = राधिकेति भावः ।
10. दर्पणम् ।
11. सूर्यमण्डलरूपे मणिदर्पणे चन्द्रमण्डलसदृशं प्रियामुखं निपतन्ती, त्रिवेणी वेति भावः । केशकलापस्य कृष्णता यमुना, रक्तडोरकं सरस्वती, मुक्तामाला गङ्गेति त्रिवेणी ।

* तुलनीयः, रसिकप्रिया—४-५
† ,, ,, ४-५
‡ ,, ,, ४-६

अथ श्रीकृष्ण-प्रकाशसाक्षाद्दर्शनम् ।

वक्षोजौ परमेकतो(ऽ?)नु(प?)[12]-मितौ हारो महार्घ्यो(ऽ?)त्र ते
हृल्लोलं सखि योषितामपि भवेत् [13]कात्रैव [14]च्(यू?)नां वचः
वक्तुं चैति हितं हितादिति कियत्कालं च [15]तर्क्यं मया
नव्यं ते दधिमन्थनं मुरहरो द्रष्टास्ति [16]देह्यञ्चलम् ॥८॥*

अथ राधाप्रच्छन्नचित्रदर्शनम् ।

चित्रितस्य हरेर्व्यक्तकामकल्पतरोर्गतिः ।
गूढातिचित्रा[17]मूढस्य वाच्यत्वं नाधिगच्छति ॥९॥†

आकृष्यानयदक्षि यद्यपि तथा स्नेहे पिनद्धं मनो
वक्त्रेऽस्याः श्रमशीकरं समुदितं रोमा[18]ञ्चुरः कम्पते ।
वक्तव्या किमियं त्रपाजलनिधौ दृष्ट्वाथ चित्रान्तरे
श्यामं संकुचिता बभूव तदियं बाहौ गृहीता यथा ॥१०॥§

अथ राधिकाप्रकाशचित्रदर्शनम्

युक्ते स्नेहदशे(ऽ?)पि[19] शामयति किं तेजस्तमश्चिन्तितं
भक्तं वद्धमपि क्षुधां दृशि च किं तृष्णां किमम्भः कथा ।

12. अनुमितौ = स्पष्टतयानुमेयौ ; अनुपमितौ, इत्यपि पाठः ।
13. अत्र विषये अन्ययूनां वच एव क ?
14. यूनाम् (?) ।
15. मयापि कियत्कालं यावत् किमिदमद्भुतं तत्त्वमित्यालोचितम् ।
16. वक्षसोऽञ्चलं संवृणु ।
17. गूढत्वादतिविचित्रेति भावः ।
18. वक्षसि रोमाञ्चो जायते ।
19. केवलया सस्नेहचिन्तया सुखाप्तिर्न भवतीति भावः । ( संदिग्धः पाठः )

* तुलनीयः, रसिकप्रिया—४-७
† ,, ,, ४-?
§ ,, ,, ४-८

सम्पत्-[20]कृत् कमला गृहे नु लिखिता मूढे दिनं यापितं
केनैवं लिखिते-[21]क्षणाद्भवति किं सौख्यं सुहृन्मेलजम् ॥११॥*

अथ श्रीकृष्णप्रच्छन्नचित्रदर्शनम् ।

मानक्रोधमृदुस्मितेक्षणभिदा[22] वक्तुं न योग्या कियद्
[23]वाग्वाक्यश्रुतिमेलनादिकमृते नो निवृतिर्मे कदा ।
आपाय्या[24]रसरूपमक्षि[रक्ष्य]मुदद्दृग्[25] धत्ते नु मीनो धृतिं(?)
दग्धं[26] स्याद्धि चतुर्गुणं(नु?)हृदयं[27] दृष्ट्वेव चित्रान्तरे ॥१२॥†

अथ श्रीकृष्णप्रकाशचित्रदर्शनम् ।

यक्षी[28]चारुदृगुत्तमरुचिः क्षम्या न [29]सौम्या न ताः
कन्याः किन्नरमानुषासुरसुरव्यालोद्भवा[30] दर्शनात् ।
नैवं भोगिवधूस्तडिल्लसतनु[31] र्नो वा रतिस्तादृशी
चित्तं चोरयते च कापि लिखिता[32] सीता[33]श्रियोरुत्तमा ॥१३॥‡

20. गृहे कमलाचित्रमेव केवलं न सम्पत्तिकरं भवतीति भावः ।
21. चित्रदर्शनात् ।
22. ०भिदा = मानादिभेदकेन इयं कीदृशी मधुरेति वक्तुं न शक्यते ।
23. वाक् = आलापः, वाक्यश्रुतिः वाक्यश्रवणम् ।
24, 25. कियत्कालं तावत् चित्रस्थनायिकारूपरसपानेन तृप्तिः स्यात् ?
26. चित्रदर्शनाद् विरहाग्निरधिकं दहतीति भावः ।
27. 'नु' इति पादपूरणे, वितर्के वा ।
28. यक्षीवापूर्वसुन्दरी ।
29. तदपेक्षया ता न तथा सौम्या इति भावः ।
30. ०नागकन्यका ।
31. सौदामिनी (?) ।
32. चित्रार्पिता ।
33. इयम् तावत् सीता च श्रीश्च, तयोरप्युत्तमा ।

* तुलनीयः, रसिकप्रिया—४-९
† ,, ,, ४-१०
‡ ,, ,, ४-११

अथ स्वप्न[34]दर्शनलक्षणम् ।

प्रच्छन्नं सर्वदा यच्च स्फुटं दृश्यं कदापि न ।
दर्शनं कोविदाः सर्वे तत् स्वप्नदर्शनं विदुः ॥१४॥*

अथ राधिकाप्रच्छन्नस्वप्न-दर्शनम् ।

उत्थाय द्रुतमाकुलालिमपटु-प्राया त्व-[35] गृह्वा अभूत्
किं मद्राक्षि तदीरयस्व च यथा बुद्धा-[36]स्तथा बुध्यसे ।
दृष्टिः प्रेत[37] इवालगत् प्रियतमश्चित्ते नु यद्वीषिता
[38]वक्त्रो(क्त्र?)च्छीकरसीत्कृतं नु विकला किञ्चार्ध-
निद्रोत्थिता ॥१५॥†

अथ श्रीकृष्णस्वप्नदशनम् ।

द्रौपद्यस्या व्रजेशो नखपदपदवीमुर्वशी ह्यनेया
लोमाभा नो शची वा तिल इव च तिलप्रोत्तमा नो मलाभा ।
मेना का [39]जातिरेषा व्रजति तदधुना जाग्रतं माञ्च कृत्वा
वाग्भावै [40]र्वाण्युमाभा रतिमधिवसति ज्योतिषो-[41]
रत्ति(?)रस्याः ॥१६॥‡

34. स्वप्ने दर्शनवत् मानसदर्शनं, न तु बाह्यमिति भावः ।
35. त्वमाकुला सती द्रुतमुत्थायापटुप्रायालिमगृह्वाः, (किं) ते अभूत् ? इत्यन्वयः ।
36. अत्र यथा प्रष्टव्या तथा पृष्ठासीति भावः ।
37. अशुभदृष्टिः प्रेतो वा त्वामलगदिति मन्ये ।
38. ते वक्त्रम् उच्छीकरसीत्कृतं, सस्वेदं सीत्कारयुक्तं च ।
39. न जाने का वास्या जातिरिति भावः ।
40. वाण्याः शोभा तु वाङ्मात्रेणावसिता, उमायास्तु श्रीः कविकल्पनैवेति तात्पर्यम् ।
41. कामपत्नी रतिस्तु अस्याः कान्ते र्लवः (रत्तिः?) एव ।

* तुलनीयः, रसिकप्रिया—४-१२
† ,, ,, ४-१३
‡ ,, ,, ४-१४

अथ श्रवणदर्शन-लक्षणम् ।

शीलरूपगुणान् बुद्ध्वा गत्याली श्रावयेत्तु यत्[42] ।
रससंख्यावताख्यातं तद्धि श्रवणदर्शनम् ॥१७॥ *

अथ राधिकाप्रच्छन्नश्रवणदर्शनम् ।

दत्त्वान्याशपथं मुहुः सकृदुपानोय श्रुतौ वासिता
नो जाने श्रवसोऽत्र[43] केन हि कदा नेत्रागतोऽयं हरिः ।
लज्जासज्जकदम्बके सति तथैवाक्ष्णा हृदा मेलितः
किं कुर्वेऽद्य स निःसरेत् कथमयं हृद्यागतस्तोकशः ॥१८॥†

अथ राधिकाप्रकाशश्रवणदर्शनम् ।

शाम्येद्रूपदिदृक्षुता श्रवणतः कालं कियन्तं पिब
प्रापूर्याक्षि कथञ्चिदेव शपथः प्रेयो[44] मम प्रेयसि ।
त्वं बाला त्वपरां क्षिपामि सुहसं स्वीकुर्वनिष्टं[45] नये
वर्षैकान्तविदं[46] वयोव्यपगमे देयं सखीभ्यः सुखम् ॥१९॥§

अपिच ।

तत् साम्प्रतं यच्छति दुर्मतेन किं
लाल्ये तवाभीरज ईदृशी मतिः ।
नञा[47] सहैव प्रियतां करोषि तत्
नाथेन सार्धं न करोषि वा कथम् ॥२०॥‡

42. सखीसमीपमागत्य नायकगुणान् श्रावयेत् ।
43. कदा पुनः कर्णमार्गान्नेत्रसन्निधिं जातस्तन्न जाने ।
44. यद्यहमेवं त्वय्यनुरक्ता स पुनः कथं न तथा भवेदिति भावः ।
45. स्वीकुर्वनिष्टम् = स्वीकुरु + अनिष्टम् ।
46. तारुण्य-रहस्यविदम् ।
47. "नेति"-वचनेन सह यदि ते एवं प्रेम, तत् कथं न तेन सहेति भावः ।

* तुलनीयः, रसिकप्रिया—४-१४-(१२?)
† „ „ ४-१५
§ „ „ ४-१६
‡ „ „ ४-१६

अथ श्रीकृष्णप्रच्छन्नश्रवण-दर्शनम् ।

लोकालोकमु लङ्घते[48] स्थितिरियं नोल्लङ्घ्यतां याति हि
त्वं सर्वानपि बोधयस्य[49]-चिकलं त्वां बोधयेत् को जनः ।
त्यक्तुं देहमुदीरय[50]-स्यपि मनाङ्मुच्येत नैव त्रपा,
स्वं मैत्री[51]-त्युभयं विरक्ष्य क इह स्वं पण्डितं वाचयेत् ॥२१॥*

अपिच ।

सङ्को[illegible]मनुशोचनमेककालं
प्राक्-पश्चिमा[52]-यनमुपैति क एकलोकः ।
दुःखं सुखं हृदयदूरतरं श्रुतन्तु
यादृक् तथा क इह दर्शयतीक्षणैस्त्वाम् ॥२२॥†

अथ श्रीकृष्णप्रकाशश्रवणदर्शनम् ।

कापट्यैकहरं प्रियत्वघटकं वश्यातिकृद्धृद्गतं
कृष्णाकर्षिमनोजहर्ष्यभिमतो[53]-द्धर्षं न भूमोहिनी ।
भूषा किं व्रजबालिकाव्यसन[54]-कृद्धृत्वा हरिर्धाममुग्[55]
वन्ये भ्राम्यति राधिके नु तव नामोच्चारमन्त्रो मतः[56] ॥२३॥§

48. 'उ' इति सम्बोधने ।
49. पाठयसि ।
50. कथयसि ।
51. स्वं (क्ली) आत्मा, मैत्री इत्युभयम् ।
52. पूर्वपश्चिममार्गम् ।
53. अभिमतफलोद्धर्षकम् ।
54. व्रजबालामोहनकृत् ।
55. नामश्रवणादेव गृहत्यागपरः (?)
56. [illegible] ।

* तुलनीयः, रसिकप्रिया—४-१७
† „ „ ४-१७
§ „ „ ४-१८

रामारमणयोरुक्तं रमणीयन्तु दर्शनम् ।
प्रेमप्रभावमधुना[57] कमनीयं कियद् ब्रुवे ॥२४॥*

इति श्रीमन्महाराजरामजीवनरायमहाशयादिष्ट-श्रीमधुसूदनकवीन्द्र-
विरचितायां रसचन्द्रिकायां चतुर्विधदर्शन-प्रच्छन्नप्रकाशवर्णनं
नाम चतुर्थ आलोकः ।

---

57. प्रेम्णः प्रभावम् ।

---

* तुलनीयः, रसिकप्रिया—४-१९

# रसचन्द्रिका

## [ पञ्चम आलोकः ]

अथ नायकनायिका-चेष्टा-वर्णनम् ।

ब्रवीति हि सखीं प्रीत्या स्वयमाकुलतान्तु या ।
तच्चित्तमवगत्याली श्रावयन्ती प्रियं वदेत्[1] ॥१॥*

अथ श्रीकृष्णं प्रति सखीवचनम् (?)

गोपी शीतलमेव[2] कर्हि च वपुस्तप्तं न धत्तुं क्षमा
कल्याद्यापि[3] कथञ्चिदालिजलदैर्वृष्टोपचाराम्बुभिः ।
कोटिशोऽपि विचार्य जीवितमथास्त्यस्या रुचिस्त्वेव[4] वा (?)
नो मन्यस्व विरुद्धमेव मुरजित् प्रायस्तदीक्षे[5]विषम् ॥२॥†

अथ राधादूतीं प्रति श्रीकृष्णवचनम् ।

क्षुद्भग्ना[6] च तृषाप्युदासमगमत् त्रासग्रहोऽस्या[7] स्तथा
निद्राह्नीव[8] विनिन्दिता किल तया विद्या[9]-विदायः कृतः ।
सा दत्ते मतिमन्मतं न शयिता शोभात्मशय्यास्वियं
हीना सर्वसुखैस्तथा विषमिवोद्गीतं[10] लगत्यत्र च ॥३॥§

1. ज्ञापयेत्
2. विषजर्जरवत् कदाचिच्छीतलं कदाचित्तप्तम् ।
3. श्वोऽद्यापि ।
4. संदिग्धः पाठः, अस्यास्तु रुचिरधुना रेखामात्रेणावशिष्टेति, रसिकप्रियासम्मतः पाठः ।
5. विषदिग्धमेव ते प्रेमेति शङ्के ।
6. क्षुधा नष्टा ।
7. त्रस्तेवावतिष्ठति ।
8. यथा अह्नि निद्रा निन्दिता, तथा रात्रावपि ।
9. विद्या-चर्चापि परित्यक्ता ।
10. सङ्गीतं पुनर्विषवद् भाति ।

---

* तुलनीयः, रसिकप्रिया—५-१
† ,, ,, ५-२
§ ,, ,, ५-३

अपिच ।

केलिप्रतीतिरिह नैव [11]निमन्त्रितेव
प्रीतिर्म्मनस्यवगता त्वदृते वदेत् कः ।
गाथा तया सह धृति र्न करे त्रपाया
विक्रीयते [12]स्म च मया सह मेलयेत् कः ॥४॥*

उपायान् यावतः प्रेयः-प्रीत्यर्थं कुरुते स्फुटम् ।
वर्ण्यन्ते तेऽखिलाः सर्वान्[13] श्रावयित्वाधुना मया ॥५॥†

पतिर्दृष्टिर्यदान्यत्र[14] निशङ्कं लोकयेत्तदा ।
तमात्मलोकिनं ज्ञात्वा त्वङ्कमा[15]-सञ्जयेत् सखीम् ॥६॥§

कदापि श्रुतिकण्डूतिरालस्याद्गात्रमोटनम् ।
कुर्वीतापि विलासेन वारं वारं च जृम्भतिम्[16] ॥७॥‡

---

11. प्राघुनिकेवेति भावः ।
12. सा पुनः लज्जाया हस्ते प्रागेव विक्रीतेव लक्ष्यते ।
13. सर्वानुपायानिति शेषः ।
14. अन्यत्र न्यस्तदृष्टिं नायकं पश्यतीति भावः ।
15. सख्यन्तराले आत्मानं गोपयति ।
16. जृम्भां कुर्वीत ।

---

* तुलनीयः, रसिकप्रिया—५-३
† ,, ,, ५-४
§ ,, ,, ५-५
‡ ,, ,, ५-६

मुहुर्म्मिथ्या हसित्वैवोत्तिष्ठेद्वाचं[17] वदेत् सखीम् ।
एवं छलाच्छलादुगात्रं प्रियमादर्शयेत् प्रिया ॥८॥*

प्रकटीकुरुते यत्तु दम्पती स्वमुदं प्रति ।
तत् प्रच्छन्न[18]- प्रकाशञ्च वुदुध्या कुर्यात् समीहितम् ॥९॥†

अथ राधिका-प्रच्छन्न-चेष्टा-वर्णनम् ।

हृत् संचोर्य मुहुर्विवृत्य च मुखं भूयः किमालोकसे
कस्मात्त्वं हससि प्रमोदमपि च स्वान्ते त्वया(?) वर्द्धयः(?)[19] ।
कंसारेः [20]शपथः किमुज्झसि मुहुर्जृम्भां मम प्रेयसि
त्वं यत् [21]खाद च वीटिकां यदि पुनस्त्वालस्यमेवागतम् ॥१०॥§

अपिच ।

गर्वादुगात्रविमोटनेन कुरुषे प्रोड्डीनमेवाञ्चलं
वक्षोऽनावृतमेवमङ्गमपरं जातं छविच्छादितम् ।
फुल्लालिङ्गसि वक्षसीह वहुशो दोलायिता तिष्ठसि,
भ्रामं भ्राममयेद्यभाषस इदं किञ्चित् त्वमादीः[22] खलु ॥११॥‡

---

17. सख्या सहालापादिमिषेण नायकायात्मलावण्यं दर्शयतीत्यर्थः ।
18. एतासामपि चेष्टानां प्रच्छन्नप्रकाशात्मकौ द्वौ भेदाविति भावः ।
19. मनसि ते आनन्द उपचितः इति भावः ।
20. कंसारेः शपथेन पृच्छामीत्याशयः ।
21. ताम्बूलवीटिकाम् ।
22. किमपि मादकद्रव्यं त्वया गृहीतमपि ?

---

* तुलनीयः, रसिकप्रिया—५-७
† " " ५-८
§ " " ५-९
‡ " " ५-९

अथ राधिका-प्रकाश-चेष्टा-वर्णनम् ।

चुम्बित्वा वदनं मदीयमयि ते चुम्बेच्छुता पूर्यते,
दग्धासोस्तृषया[23] भवेत्तुहिनता नोहार[24]-लेहेन किम् ।
वक्षः क्षुद्रकरेण सुन्दरि कथं त्वं स्पर्शयेः स्पर्शये-[25]
तं यं स्पर्शयितुं तवाभिलाषितं[26] संवर्द्धितं वर्धते ॥१२॥*

अपिच ।

आयाता यदि खेलितुं कुरु तदा खेलां यथा खेलति,
श्रीकृष्णाय शपे त्वया तु किमिदं निःसारितं खेलितम् ।
फुल्लोत्फुल्लतमा ममालि परमा किं मान्त्वमालिङ्गसि,
प्रेत्यैतं[27] न किमाश्लिषस्ययमये यः श्लेष्टुमातिष्ठति ॥१३॥†

अथ श्रीकृष्णप्रच्छन्नचेष्टा-वर्णनम् ।

वध्नास्येव मुहु विंहाय च शिरोवेष्टं त्वमालस्यतो,
नीत्वादर्शमुदीक्षसेऽ(स्व?)भिमतं त्वन्यत्र चान्यादृशम् ।
त्रोटं त्रोटमभिक्षिपस्यपि तृणं त्वं कृष्ण[28] कस्योपरि(?),
त्वं कस्याश्चरणे[29] पत(ति?)स्यसि तथा यादृग्
[30]व्यलीकोऽस्ति च ॥१४॥§

---

23. दग्धहृदस्य जनस्य, असुपदं हृदयोपलक्षणपरम् ।
24. शिशिरकणावलेहनेन ।
25. स्पर्शय + एतम् ।
26. चिराय पोषितमभिलषितम् ।
27. प्रेत्य + एतम्, कथं न प्रगत्यैन-मालिङ्गसीति भावः ।
28. शून्यमना इव कमभिलक्ष्य तृणानि क्षिपसीति भावः ।
29. पतिष्यसीत्यर्थः ।
30. व्याजः ।

---

* तुलनीयः, रसिकप्रिया—५-१०
† ,, ,, ५-१०
§ ,, ,, ५-११

अपिच ।

अङ्गुल्या[31]ववकृत्(?) कदापि झटिति श्रोत्रस्य कण्डूतिकृत्
गात्रं मोटनकृज्ज्वरी किल यथा जृम्भां तथैवोज्झसि ।
त्वं मह्यं मणिमालिका(कां?) च ददशे(?)[32] कस्योपरिभ्रामयन्
भूय स्तोकश एव गायसि हरे कीदृक् त्वमद्याभवः ॥१५॥*

अथ श्रीकृष्ण-प्रकाश-चेष्टा-वर्णनम् ।

योषिद्भ्यः परितोषि[33] वस्तु हि ददद्यस्याः[34] कृते प्रत्यहं
दत्त्वा त्वं परिनर्त्तयस्यपि हरे सायं प्रभातावधि ।
मन्त्रं वा वशकारकं प्रकुरुषे यन्त्रः कियान् हारको
[35]गण्यस्तिष्ठसि [36]निर्ज्जितो न मिलिता केनापि चैषा हरे ॥१६॥†

अपिच ।

चेन्मलयाम्येः तदा यदीहे,
तदालभेऽसौ मिलितुं हि तिष्ठति ।
[37]संमेलयोपेत्य परं किमन्यत्
क्रोड़े निधायैव समानयामि ॥१७॥‡

---

31. शुभसूचकाङ्गुलिमोटनकृत् ।
32. ? ( सन्दिग्धः पाठः ) ।
33. उपहारवस्तु ।
34. ददत् = वस्त्वित्यस्य विशेषणम् ।
35. गणनीयो मयेति शेषः ।
36. निर्जितः = पराजितः ।
37. सम्मेलया = मिलनेच्छया ; 'सम्मेलय' इति वा पाठः ।

---

* तुलनीयः, रसिकप्रिया—५-११
† ,, ,, ५-१२
‡ ,, ,, ५-१२

अथ स्वयंदूतत्वलक्षणम् ।

यदा कथमपि क्वापि मिलतो[38]-ष्द्वयं न हि ।

तदा स्वबुद्धिबलतः स्वयं घटयतीह तत् ॥१८॥*

अथ राधिकाप्रच्छन्नस्वयंदूतत्ववर्णनम् ।

दीनो भवन्मुहुरपीक्षितुमाविलिख्य

दूराच्च पत्रमकरोरयि माननां च ।

दृष्ट्वामनोऽ[39]मिलद (?)त्वञ्च तथा मिलित्वा

खेलाकृतौ च मिलिता[40] मतिरेव साध्वी ॥१९॥†

अपिच ।

अन्यच्च संचालयसीह दृष्टिं

केनापि देहीह कुमार कृष्ण ।

नास्ते विलम्बोऽत्र मृणालतन्तु-

र्यथा तथैव त्रुटितेष्टता[41] नौ ॥२०॥§

अथ राधिकाप्रकाशस्वयंदूतत्ववर्णनम् ।

धात्री गेहे न दात्री ज्वररुगुपहता भोजयित्र्यक्षि रुग्नं

रात्र्यन्धो द्वारपालो बधिर इति हरे दुःखिताहं नवीनम् ।

न्याय्यं निर्वाहय त्वं कियदिह हि सखीसञ्चयो वञ्चनीया

गत्वा शेयं[42] मयाभिः[43] सह किमिह मया ताभिरागत्य शेयम् ॥२१॥‡

---

38. प्रणयियुगलम् ।

39. संदिग्धः पाठः ।

40. मतिः = बुद्धिः ।

41. नौ = आवयोस्त्रुटितेष्टता = भग्नमित्रता ।

42. शेयं मयेत्यन्वयः ।

43. आभिः सखीभिः सह ।

---

* तुलनीयः, रसिकप्रिया—५-१३

† ,, ,, ५-१४

§ ,, ,, ५-१४

‡ ,, ,, ५-१५

श्रीकृष्णप्रच्छन्नस्वयंदूतत्ववर्णनम् ।

शोभन्त एत इव हन्त निजांशभाज-
श्चेतो[44]ऽनुते[45] सुबलदासवदाचलन्ति ।
मन्नाम ते स्वय[46]मकर्मकरा नयन्त्ये-
तेऽत्रा मिलन्ति परिहीनगिरोऽतिदीनाः[47] ॥२२॥*

श्यामो नयन् सुबलजाः निशाम्य राधा-
मेवं मनोभवमये [48]भवदेष लग्नः ।
नीत्वाधुना सह[49] सखीन् गमनं वनाय
त्यत्क्वा[50] कपीनकृषिकेलिसखानह[51] हि ॥२३॥†

श्रीकृष्णप्रकाशस्वयंदूतत्व-वर्णनम् ।

व्रजाटवीं यामि किमस्त्यकर्मा
तथासि हि त्वं विवदे तदा किम् ।
अये कियत् खेलय नेति खेला-
द्य विस्मृता नेति गले(?)[52] पतिष्यन ॥२४॥‡

---

44. अनुते = अप्रशंसितेऽर्थे ।

45. सेवक इवारचन्ति ।

46. ते स्वयमेवापकृतमनुष्ठाय मन्नाम्नारोपयन्तीति भावः ।

47. अतिकृपणः ।

48. सुबलनामेत्यस्य विशेषणम् ।

49. सखीनिति नीत्वेत्यस्य कर्म, सहपदं गमनमित्यनेन सह अन्वेयम् ।

50. वनक्रीडासहचरान् वानरान् ।

51. कृषिश्च केलिश्च तयोः सखीन् आभीरानित्यर्थः, तथा न भवन्तीति, वानरानिति भावः ।

52. किं पुन गले पतित्वा क्रीड़यिष्यसीति भावः ।

---

* तुलनीयः, रसिकप्रिया—५-१६

† ,, ,, ५-१६

‡ ,, ,, ५-१७

प्रेमा किमास्ते हृदये न वास्ते
प्रेमास्ति किं नास्ति हि तत्र योत्स्ये ।
युक्तं किमेवं मयि रक्षि[53] चैवं
यदुक्तमुक्तं[54] हि किमत्र कार्यम्[55] ॥२५॥*

अथोढालक्षणम् ।

विज्ञाप्य बहुधा प्रेम कृत्वोढारीतिमीदृशीम् ।
व्याकुलात्मा त्रपां त्यक्त्वा पत्या[56] संमिलति स्वयम् ॥२६॥†

ऊढावर्णनम् ।

गायत्यदो हि जगद्[57]-ध्वनि नापि रुद्धः
पन्था मनोरथरथस्य[58] पलं रथं तम् ।
आरुह्य चक्र[59]-मणिमाशुगचक्रमेतं
चेतो भ्रमेत् ख[60]-भुवि शीत[61]-तपाब्दकाले ॥२७॥‡

---

53. रक्षणयोग्यम् भवेत् किम् ?
54. यदत्र वक्तुमुचितं तदेवोक्तम् ।
55. किं तयात्र कार्यं ? न किमपीत्यर्थः ।
56. स्वयमेव स्वेच्छया नायकसमाराधनपरा भवति ।
57. अध्वनि = मार्गे ।
58. पलमात्रमपि ।
59. पवनविचारात्मकं चक्रद्वयम् ।
60. आकाशे ।
61. शीतातपवर्षासु ।

---

* तुलनीयः, रसिकप्रिया—५-१७
† " " ५-१९
‡ " " ५-२०

रक्ष्यं वपुः कियदृतेऽ[62]च्युतमेव कूप-
वापीसरःसमम[63]हानि बहूनि निन्ये ।
लज्जातरुं मतिगिरिञ्च निपात्य भित्वा,
खेला[64] मिलामि पतिमब्धिरिवापगत्वा[65] ॥२८॥*

कीर्त्ति[66] र्जातिसमं[67] गता प्रणयिता न ह्याकुले निर्गतो
गर्वोऽयं गुणरूपयौवनभवो भ्रान्तं च पुण्यं हृतम् ।
शप्त्वा ते कथये ह्रियाच्युत मनाग् ध्वस्तापि सम्बन्धिता
त्वां ध्यात्वाखिलमत्यजं कपटतां नो किञ्चिदप्यत्यजः ॥२९॥†

अथानूढालक्षणम् ।

सानूढा या स्वयं कान्तं नोपैत्यधिकलज्जया ।
वदत्यपि सखीमेव कथञ्चित्तापमान्तरम् ॥३०॥‡

---

62. अच्युतम् ऋते एव ।
63. वापीकूपसरोवरसदृशं वपुः स्थिरं रक्ष्यमिति भावः ।
64. इलामि, इल् गतौ ।
65. इत्वा = गत्वा ।
66. जात्या सह यशोऽपि गतम् ।
67. अपगता ।

---

* तुलनीयः, रसिकप्रिया—५·२०
† ,, ,, ५-२१
‡ ,, ,, ५-२२

अथानूढावर्णनम्।

[68]मन्दोलोपरि(?)दोलति स्म हि हरिः क्वहोति केनोदितं
ज्ञातं वाम्बु पिबेत्ततोऽ[69]त्ति न च सा पर्णं नयेत्त्वा[70](?)-पदम्।
सास्त्रक्षि भ्रम एषको व्रज नयाशु श्याम[71]-संक्रोडनं,
वेत्सीमं हि पुनर्म्मनोजकलिका म्लाना प्रफुल्ला भवेत् ॥२१॥*

अथ प्रथममेलनस्थानवर्णनम्।

जनी[72] सहचरी धात्रीगृहं शून्यगृहं तथा।
निशि[73]-चारो(ऽ?)तिभीतिश्च(?) उत्सवो[74] व्याधिकैतवम् ॥२२॥†

निमन्त्रणं त्वरण्यादि विहारोप्येतदीरितम्।
राज[75]-दुर्गतयोः स्थानं कृतं धात्रा(?)[76]दिमेलने ॥२३॥‡

68. हिन्दोलमुपरि। cf. "शवरूपमहादेव-हृदयोपरिसंस्थिताम्" मुण्डमालातन्त्रे दक्षिण-कालिकाध्यानम्।

69. न जलं पिबति, नवान्नमत्ति।

70. ताम्बुलाहरणं तु तत्समीपे विपदेव।

71. अक्षि साश्रु, एषको भ्रमः ; व्रज, आशु श्यामसंक्रीड़नं नय।

72. दासी।

73. रात्रौ भ्रमनम्।

74. उत्सवक्षेत्रम्।

75. राज्ञो दरिद्रस्य च।

76. धात्र्यादिः (?)

* तुलनीयः, रसिकप्रिया—५-२३

† " " ५-२४

‡ " " ५-२५

अथ जनीगृहमेलन-वर्णनम् ।

सायं त्रासपदक्षिपो व्रजम(व?)धू[77]-मध्ये वधूवेशधृक्
कृष्णो बुद्धिबलाद् भुजस्मरलता[78]-राधागलालम्बनः ।
कामं नर्म च लक्षधा सफलयन् कुर्वन् नु गुप्तो निशि,
क्रीडामद्य चकार चोर[79]-वचनी(नीं?) सत्यां जनीप्राङ्गने ॥३४॥*

अथ सखीगृहमेलन-वर्णनम् ।

तारे पुत्तलिकामिवाधरपुटे वेणुर्यथा दोर्युगे
वन्यं [80]माल्य(ल्य?)मिवाङ्कके मलयजं हारं च कण्ठे यथा ।
अनीतां कतिधा गृहेऽत्रकलिकां कृत्वा यथा चाम्पिकीं
कृष्णेमामिव देवताञ्च [81]श(स?)रलां चित्ते मिलित्वार्पय ॥३५॥†

अथ धात्रीगृहमेलन-वर्णनम् ।

हास्यक्रीड़ाप्रेहलीसदुपकथनतो नक्तमर्धे व्यतीते
मन्देदौ गोपगोप्यो निजगृहमगमन्निद्रयार्तास्ततोऽभ्रे,
दिग्व्यापिन्यत्र धात्री वदति हरिमिदं यान्तमुच्चैस्तमिस्रे,
रात्र्यर्द्धेऽङ्के[82] हि राधार्द्धशयन इह भोस्त्वं शयित्वैव तिष्ठ ॥३६॥‡

---

77. वधू (?)

78. भुजावेव स्मरलते ताभ्यां राधाया गले आलम्बनं यस्य स ।

79. चोरवचनीं क्रीडाम्, "चोर चोर खेला" इति वङ्गभाषायां, "आँखमिचौलीति" हिन्दी-भाषायाम् ।

80. वनमालिकामिव ।

81. सरलाम् ।

82. क्रोडे ।

---

* तुलनीयः, रसिकप्रिया—५-२६

† " " ५-२७

‡ " " ५-२८

अथ शून्यगृहमेलन-वर्णनम् ।

पश्यन्त्याः शून्यचित्रालय[83]-मतिलसति स्वाकृतो राधिकाया-
स्तानं मञ्जीरनादो नयति पदतलं मञ्जुतालञ्च दत्ते ।
दृष्ट्वा कस्मादिदानीं हरिमजनि[84]वपु र्यादृशं दुर्वच[85]न्तं (स्तन?)
निर्ल्लज्जा[86] सालज्जा घन इव नयनाम्भोजमाया[87]दमुष्याः ॥३७॥*

अथ निशाचारमेलन-वर्णनम् ।

गोष्ठं द्रष्टुं जगाम व्रजनवयुवती-सञ्चयो ह्येकदासां
गेहा[88]-गत्यां च सत्यां निशि वृत[89]-दिशि वार्व्वाह[90] एवान्धकारैः ।
छन्ना पृथ्वी तथासीद्यदिह परजनो ज्ञायते व्याहृतेन
श्यामः कामं स चेतोगतमिह तनुते तद्वियोगं विसृज्य ॥३८॥†

अथातिभयमेलन-वर्णनम् ।

लग्नोऽग्नि वृ क(ष?) भानुगेहनिकटे ज्ञात्वा चतस्रो दिशो
धावन्तो व्रजवासिनो हि मनुजाः संव्याप्तवन्तो द्रुतम् ।
शब्दोऽतीव हि यत्र तत्र तुमुलो नारीनराणां घटा
सर्वासां परिमोचिता हि विगता ह्रीर्हावभावास्तथा ॥३९॥‡

---

83. अतितरां शोभते ।

84. 85. अस्या वपुषोऽवस्था यादृशी जाता, सा कथमपि वक्तुमशक्या ।

86. यद्यपि सा निःशङ्कविचरणकाले तथा लज्जानम्रा नासीत्, कृष्णदर्शनेन पुनर्लज्जानतमुखी जाता ।

87. अगच्छत् ।

88. गृहागमनानन्तरम् ।

89. 90. वार्वाहे = वारिवाहे वृतदिशि निशि अन्धकारैश्छन्नेति भावः ।

---

* तुलनीयः, रसिकप्रिया—५-२९

† „ „ ५-३०

‡ „ „ ५-३१

अपिच ।

कालेऽस्मिन् शुकसारिकां बहिरितो निःसारयन् राधिकां
कृष्णोऽजागरयत् तथान्ययुवती-संजागरं कल्पयन् ।
चुम्बित्वा चिवुकं सुचारु च तथा गण्डं विशालेक्षणं
निन्ये चम्पकमालिकामिव शुभां बालामुरस्यापर्यन् ॥४०॥*

अथोत्सवमेलन-वर्णनम् ।

रात्रौ जागरितुं बलोद्भवदिने देहं सुवर्णप्रभं
कृत्वा वेशयुतं समाययुरथो गोप्यो हि नन्दालये ।
अत्यन्तं जनता बभूव च ततो मध्येप्यधोप्यूर्द्ध्वके
नैवासीत् कणमात्रतोऽपि च यथा तत्रावकाशः क्वचित् ॥४१॥†

अपिच ।

तौर्यत्रिकं विदधतां बहुरूपिणाञ्चा-
नन्दप्रवाह उदितो(ऽ)स्ति च यत्र तत्र,
श्यामस्य शून्यशयने शयिताथ राधा
मेने[91] द्विरागममिवैत्य शयान एषः ॥४२॥§

अथ व्याधिमिषमेलन-वर्णनम् ।

दृष्ट्वा निदानमपि भेषज[92] एव दत्ते
सा धैर्यमेति न विचार्य कृतोपचारा,
आधिप्रणाशन[93]हुतं हुतमेव [94]वह्नौ
वेदोदितेन[95] न (च ?) तथा न सोज्झिताधिः ॥४३॥‡

---

91. द्विरागमनावसरे प्रथममिलनमिवेति भावः ।
92. भेषजे = औषधे ।
93. रोगशान्त्यर्थं हवनविशेषम् ।
94. यज्ञाग्नौ ।
95. वेदोक्तशान्त्यादिकर्मभिरायुर्वेदोक्तोपचारानुष्ठानेन च व्याधि नैवापगतेति भावः ।

---

* तुलनीयः, रसिकप्रिया—५-३१
† ,, ,, ५-३२
§ ,, ,, ५-३२
‡ ,, ,, ५-३३

अपिच ।

केनापि जीव[96] चल केशव संब्रुवाणा
दीना बभूव नितरां वृक(ष ?)भानुराज्ञो(?)
कृत्वा[97]-धिना शमति यत्नत आगतस्त्वं
भूयस्तदाधिरति[98]-दुःखद एव तस्याः ॥४४॥*

अथ निमन्त्रणमिषमेलन-वर्णनम् ।

राधां भोजयितुं निमन्त्र्य च समाहूतां यशोदानयद्
भुक्त्वा कल्प्य[99]-गृहं विलोकितुमगात् पर्णाशनैकोपरि ।
आनन्दश्च विचार्य कृष्णमशकृत् पश्यन्त्यसौ विद्रुता
दृष्ट्वास्या जगृहेऽभयेन हरिणा व्यालीव वेणी द्रुतम् ॥४५॥†

अपिच ।

आश्लिष्य चैवाङ्के विपूरमेतां[100]
कृत्वा मनोवाञ्छितमेव वक्त्रम् ।
संमण्डयन् केशरतो हि नासा-[101]
भूषां समुत्तार्य नयन [102]जहौ सः ॥४६॥‡

---

96. जीवन !
97. [illegible] ।
98. पूर्ववद् व्यधिपीडितेति भावः ।
99. कल्प्यगृहं = सुसज्जितगृहमिति भावः ।
100. कमनीयं वपुः ।
101. नासिकाभूषणम् ।
102. केशरादिना संमण्डनार्थं समीपं नयन् ।

---

* तुलनीयः, रसिकप्रिया—५-३३
† ,, ,, ५-३४
‡ ,, ,, ५-३४

अथ वनविहारमेलन-वर्णनम् ।

देहि ह्य[103] एव निरगा अयि दातु-मुक्त्वा[104]
त्वञ्च प्रसारय पटाञ्चलमञ्चलञ्च ।
सम्पूरत्य(?)[105]-ज न वर्त्म तदा त्यजामि-(?)
ह[106]त्याजये यदि तया त्रपितेक्षितानि ॥४७॥*

अपिच ।

ब्रूहीरीतं सावहितञ्च कोऽपि
श्रोष्य[107]-त्यसौ वेत्स्ययि [108]कस्य पुत्रो ।
जानामि तावद् वृकभानुजाता[109]
न वेद्मि कस्यासि परन्तु चेटी[110] ॥४८॥†

अपिच(?) ।

राधा कृष्ण[111] उभौ च मानससरस्तीरे स्थितौ दोःस्पृशौ
स्रग्भाति द्व्युरसि[112] प्रियाप्रियशिरोमुक्तालि-[113]कोष्णीषकम् ।

---

103. ह्यः = गतदिनमित्यमरः ।
104. दास्यामीत्युक्तेति भावः ।
105. संपूरयेत्यज(?)
106. संदिग्धः पाठः, त्यजामीह त्याजयेः(?)
107. कोऽपि श्रृणुयाद्वा ।
108. कस्येयं पुत्रीति जानासि किम् ?
109. वृषभानुकन्या ।
110. दासी ।
111. राधा कृष्णश्च उभौ ।
112. द्वयोरुरसि ।
113. प्रियाशिरसि मुक्तालिकं च प्रियशिरसि उष्णीषञ्चेति ।

---

* तुलनीयः, रसिकप्रिया —५-३५
† ,, ,, ५-३५

वासः श्वेतमधात् कटौ मलयजैः सर्वाङ्गमाचित्रयत्
क्षीराब्धे भु षि निःसृतः सह नयन् मन्ये श्रियं श्रीपतिः ॥४६॥*

अथ जलविहारमेलन-वर्णनम् ।

ग्रीष्मे गोपसुताश्च यामुनजले खेलन्ति नित्यन्त्वितः
पारेऽत्र व्रजबालकौघ-[114]दलतो गोपालको राजते ।
मज्जन मीनगतिः समित्य[115] समिलन्नुत्तिष्ठति स्वस्थले[116]
एवं काममुभौ विपूर्य रुचितश्छन्नौ छलात्तिष्ठतः ॥५०॥†

रामारमणयोरेवं विशेषो मिलितस्य च ।
वर्णितो बुद्धिबलतो बोध्या बहुविलासिताः[117] ॥५१॥§ इति परकीया(?) ॥

तृतीया[118] तरुणी यान्या वर्ण्या कथमिह स्थले ।
विरसो रसमध्ये नो वर्ण्यः प्रोक्त रसज्ञकैः ॥५२॥‡

---

114. व्रजबालकसंघ इति भावः ।

115. संगम्य ।

116. यमुनाजले मज्जन् मीनगतिः राधिकां संगम्य पुनरागत्य अपरे पारे स्वस्थले उत्तिष्ठति सलिलादिति भावः ।

117. विलासिनां भावाः ।

118. सामान्यवनिता ।

---

* तुलनीयः, रसिकप्रिया—५-३६
† „ „ ५-३७
§ „ „ ५-३८
‡ „ „ ५-३९

यावत्यो नायिका एता वर्णिताश्च यथामति ।
व्याख्याता यत्र बुद्धैश्च बलादष्ट[119]-विधाश्च ताः ॥५३॥*

इति श्रीमन्महाराज-रामजीवनराय-महाशयादिष्ट-श्रीमधुसूदन-कवीन्द्रविरचितायां रसचन्द्रिकायां राधाकृष्णचेष्टावर्णनं नाम पञ्चम आलोकः ॥

119. अष्टविधाः ।

* तुलनीयः, रसिकप्रिया—५-४०

## [ षष्ठ आलोकः ]

अथ भावलक्षणम् ।

आननेक्षणवाचां हि वर्त्मना प्रस्फुटीभवन् ।
विकारो मनसो योऽत्र तं भावं कवयो विदुः ॥१॥*

अथ भावस्य पाञ्चविध्य-कथनम् ।

विभावश्चानुभावश्च स्थायी च सात्त्विकस्तथा ।
व्यभिचारी च कथिता भावाः पञ्चविधा बुधैः ॥२॥†

अथ विभावलक्षणम् ।

प्रकाशते ह्यनायासं यैरनेकरसं जगत् ।
त एव कथिता सर्वे विभावा रसकोविदैः ॥३॥§

अथ विभावस्य द्वैविध्य-कथनम् ।

आलम्बनः स एकः स्यात् तथैवोद्दीपनः परः ।
इत्येव द्विविधः प्रोक्तो विभावो भावकोविदैः ॥४॥‡

---

* तुलनीयः, रसिकप्रिया—६-१
† ,, ,, ६-२
§ ,, ,, ६-३
‡ ,, ,, ६-४

अथालम्बनोद्दीपनभावलक्षणे ।

आलम्बतेऽतनु[1]र्येन स एवालम्बनो भवेत् ।
उद्दीप्यते रसो येन स एवोद्दीपनो मतः ॥५॥*

अथालम्बनवस्तु-वर्णनम् ।

दम्पती यौवनं रूपं जातिलक्षणसंयुतः ।
सखीजनः कुहु[2]कण्ठो(?) कलितश्च मधु(?) ऋतुः ॥६॥†

फुल्ल-पुष्पञ्च मधुप आरामोऽम्बुचरस्तथा ।
जलस्थामलपाथोजं भ्रमरः कमलाकरः ॥७॥§

चातकश्चारु केका च तडिद्[3]घनध(नुर्घ?)नोऽम्बरम् ।
चारुशय्या प्रदीपश्च सद्गृहं[4] नागवल्ल्यपि ॥८॥‡

---

1. अतनुः कामः रतिरिति भावः ।
2. कुहुः = कोकिलालापः ; कण्ठीकलितः = पारावतकूजितम् ।
3. विद्युत्, इन्द्रधनुः, मेघः, अम्बरम् ।
4. नागवल्ली = ताम्बूलवल्ली ।

---

* तुलनीयः, रसिकप्रिया—६-५
† ” ” ६-६
§ ” ” ६-६
‡ ” ” ६-६

मणिर्गानं पिधानञ्च नव[5]नृत्यभिदा(स्त?) तथा ।
वीणाद्याश्च समाख्याता बुधैरालम्बना इमे ॥९॥*

अथोद्दीपनवस्तु-कथनम् ।

आलोकालापसंश्लेषा नखदन्ताहती तथा ।
चुम्बना[6]-मर्द्दनस्पर्शा अमी उद्दीपना मताः ॥१०॥†

अथान्य(नु?)भाव-लक्षणम् ।

आलम्बनोद्दीपनयो र्व्याख्यातोऽनुक्रमो हि यः ।
उक्तोऽनुभावे[7] सर्वः स दम्पतीप्रीतिकारकः ॥११॥§

अथ स्थायिभाव-कथनम् ।

रतिः स्मितञ्च शोकश्च क्रोधोत्साहौ भयं तथा ।
निन्दा विस्मय एवैते स्थायिभावाः प्रकीर्त्तिताः ॥१२॥‡

---

5. अभिनवनृत्यभेदाः ।
6. आ समन्तान्मर्दनम् ।
7. अनुभावे = अनुभावप्रसङ्गे ।

* तुलनीयः, रसिकप्रिया—६-६
† „ „ ६-७
§ „ „ ६-८
‡ „ „ ६-९

अथ सात्त्विकभाव लक्षणम् ।

स्तम्भः स्वेदोऽपि रोमाञ्च स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रुपातश्च भावा हि सात्त्विका इमे ॥१३॥*

अथ व्यभिचारिभाव-लक्षणम् ।

रसमध्ये रसादेव[8] यो भावो नियमं विना ।
उत्पद्यते बुधैरेष व्यभिचारी प्रकीर्त्तितः ॥१४॥†

तथाहि ।

निर्वेदो ग्लानिरालस्यं शङ्का मोहश्च दीनता ।
स्मृति धृ तिस्त्रपा लौल्यं श्रान्तिश्चिन्ता मदस्तथा ॥१५॥§

गर्वोद्वेग(गो?)[9] मदो निन्दा विषादो जडतोत्कता ।
निद्रास्वप्नप्रबोधाश्च विवादोन्मादभीतयः ॥१६॥‡

---

8. यथा शृङ्गारे निर्वेदादयः ।
9. उद्वेगः = उत्कण्ठा ।

---

* तुलनीयः, रसिकप्रिया—६-१०
† „ „ ६-११
§ „ „ ६-१२
‡ „ „ ६-१३

मत्युग्रता[10]-तिरोगश्चापस्मारस्त्रासतर्कितम् ।
आधिर्मृत्युभ(र्भ?)यश्चैते भावा हि व्यभिचारिणः ॥१७॥*

अथ हावलक्षणम् ।

यो राधा-कृष्णयोः प्रेमा शृङ्गाररस एव सः ।
तस्य भावप्रभावेण हाव उत्पद्यते परम् ॥१८॥†

अथ हावभेद-कथनम् ।

हेला लीला ललितं मदविभ्रम-विहृति[11]-विलासाः ।
किलकिञ्चित-विच्छित्ति-बिब्बोक-मोट्टायित-कुट्टायित-बोधकाद्याः ॥१९॥§

एते हेलादयो हाव-प्रभेदा हि त्रयोदश ।
विविच्यैव विशेषेण कथिता रसकोविदैः ॥२०॥‡

10. उग्रता = तीक्ष्णता ।
11. विहृतिः = विहृतम् ।

* तुलनीयः, रसिकप्रिया—६-१४
† „ „ ६-१५
§ „ „ ६-१६
‡ „ „ ६-१७

अथ हेलाहाव-लक्षणम् ।

पूर्णप्रेमप्रभावे या ह्री[12]समाजस्य विस्मृतिः ।
हेलाभावः स हरते[13] हृद्राधा-व्रजराजयोः ॥२१॥*

अथ राधिकाहेलाहाव-वर्णनम् ।

आलोकाङ्कुशतो विकृष्य रुचिरभ्रू-युग्मपाशै र्गले,
वद्धा सौरभसुस्मितेन मिलति ज्योत्स्न्यां[14] तमुत्थाप्य सा ।
एकापाय्य[15] मुखामृतं वशमसौ[16] प्रेम्णोऽपि रीतिं नवां
कृत्वा[17]-हृत्य वनं निनाय सुखतो राधा हरिं हेलया ॥२२॥†

अथ श्रीकृष्णहेलाहाव-वर्णनम् ।

वेणुश्रावणयानयन्नपि भवागारं[18] स विस्मारयन्
वा(रा?)सस्थान[19]-वने प्रफुल्लमनसं पुष्पेक्षणात् पाययन् ।
भास्वद्रूपमहामधुस्मरकलीं[20] पर्यष्वजद्धलया
जह्ने श्रीवृक(ष?)भानुसूनु-हृदितोऽद्य श्रीहरि र्नागरः ॥२३॥‡

---

12. समाजविस्मृतिसाधिका या लज्जेति भावः ।
13. हृदयम् ।
14. ज्योत्स्नामय्याः ।
15. आपाय्य = पाययित्वा ।
16. प्रेम्णो वशं, नवां रीतिमपि कृत्वेति भावः । अपिशब्दश्चार्थे ।
17. आहृत्य = प्रलुभ्य ।
18. शुभालयं, पितृगृहमित्यर्थः ।
19. रासस्थानेति वा पाठः ।
20. मदनकलिकाभूतां श्रीराधामिति भावः ।

* तुलनीयः, रसिकप्रिया—६-१८
† ,, ,, ६-१९
‡ ,, ,, ६-२०

अथ लीलाहाव-लक्षणम् ।

प्रियाप्रियतमौ यत्र लीलाः प्रकुरुतः शुभाः ।
तत्रैवोत्पद्यमानन्तु लीलाहावं विदु र्बुधाः ॥२४॥*

अथ राधिकालीलाहाव-वर्णनम् ।

मानस्यात्य[21]-पमानजस्य हरणं पादानतैः कुर्वती
ताम्बूलाशनि[22]-काशने च चकितं सर्वासु दिक्ष्वीक्षितम् ।
लीला[23]-(च्छा?)छादनजाततल्पशयनं भङ्गञ्च पत्रारवैः
कुञ्जात् कुञ्जगतिञ्च शिक्षति मुदा राधा निमील्याक्षिणी ॥२५॥†

अथ श्रीकृष्णलीलाहाव-वर्णनम् ।

दृष्टिं न्यस्य गवाक्ष ईक्षितुमयं प्रोच्चै र्गृहोर्द्धारुहो[24]
धावन् गोपचरित्रनिन्दनकरो[25] ध्यायन् सुगायन् गुणान् ।
तं वक्षश्च समानयन् सरभसः पश्यन्[26] सुहृच्चित्रतां
गच्छन्नङ्गनतो गृहं तत इदं त्वित्थं स निन्ये दिनम् ॥२६॥§

अथ ललितहाव-लक्षणम् ।

वचो हास्यं विलोकश्च गमनं रूपमेव च ।
यथैतानि तथा वान्या हावोऽत्र ललिताभिधः ॥२७॥‡

21. अत्यर्थमपमानं सहन्नपि मानभञ्जनम् ।
22. आशनिकं च अशनञ्च ते, स्वयं ताम्बूलमत्ति खादयति चेति भावः ।
23. लीलया आच्छादनमेव जातं तल्पशयनं यस्मिन् तत् ।
24. गृहस्योर्ध्वमारोहतीति ।
25. गोपचरित्रदूषकः ।
26. सुहृदां वैचित्र्यम् ।

* तुलनीयः, रसिकप्रिया—६-२१
† ,, ,, ६-२२
§ ,, ,, ६-२३
‡ ,, ,, ६-२४

अथ राधिकाललितहाव-वर्णनम् ।

कान्तस्वच्छकलेवरा च विमला[27]-प्रायालिसङ्गाश्रिता
याद्दक् सा कमला सनालकमलं पाणौ नयन्ती तथा ।
संभ्रान्ता कलहंस-चारुशिशवो(?) मञ्जीरनादश्रुते-
र्भूयः प्रोच्चकिता पतन्ति रुचिरास्ताद्दङ्मरालार्भकाः ॥२८॥*

अपिच ।

सङ्कोचभाव(र?)[28]-कुचभारकचोच्चभारे-
र्बालाकटीतटमुपैति विनम्रभावम् ।
मन्दं हसन्त्यपि मृदु व्रवतीक्षमाणा
मन्दं चलन्त्यपि मनो हरते हरेः सा ॥२९॥†

अथ श्रीकृष्णललितहाव-वर्णनम् ।

वासो वि(वै?)द्युतमिन्द्रधनु(?) च दधत् पिछं[29](च्छं?) तथा वादयन्
वेणुं सन्मृदु गीतयन्नपि सखीन् केकावतो नर्त्तयन् ।
[illegible] निका[illegible]लि [30]शमयन् द्दक्चातकान्तस्तपं[31]
कुर्वन्नीरदवे[illegible] [illegible] व्रजं काननात् ॥३०॥‡

27. विमला, पुरुषोत्तमे देवीविशेषः, सरस्वती वा ।
28. संकोचभार इति साधुः पाठः ।
29. चूडास्थितं शिखिपुच्छमेवेन्द्रधनुः इति भावः ।
30. ०स्तपमित्यस्य शमयन्नित्यनेनान्वयः ।
31. दृश एव चातकाः तेषामन्तस्तापः ।

* तुलनीयः, रसिकप्रिया—६-२५
† ” ” ६-२५
‡ ” ” ६-२६

अथ मदहाव-लक्षणम् ।

पूर्णप्रेम-प्रभावेण यो गर्वो बहुधैधते ।
तस्य पूर्णविकारेण मदहावः प्रजायते ॥३१॥*

अथ राधिकामदहाव-वर्णनम् ।

राधाद्यास[32] सुकान्तिरालि-विलसत्-सौरूप्यमानोन्मदा
श्यामः कार्माजिदैत् सुतर्कचतुरस्तां तत्र मानाहतौ ।
स्मित्वाथो[33] शपथं यदा न(प?)-[34]दनतिं कृत्वा क्रि(कि?)यंतं[35] स्थितं
प्रोत्थे[36] घोरघने हृदा तडिदिव श्यामा-ब्भ्रमेषाश्लिषत् ॥३२॥†

अथ श्रीकृष्णमदहाव-वर्णनम् ।

नो मोह-प्रभुभूमि-मोहि-चपलाख्याता[37]लिहृच्चञ्चला
नो कर्णे रतिकीर्त्तिकृत् कथमपि त्रुट्यत्कला[38] चान्द्रिकी ।
ज्ञातास्तेऽन्यकथा क्व वा न हि हरो रम्या[39] रमा मन्यते
राधा-प्रेममदो मनोहर इतो नान्यां नयत्यक्षणि ॥३३॥§

32. राधा + अद्य + आस ।
33. अथो:= अनन्तरम् ।
34. पदनतिमिति साधुः पाठः ।
35. कियत्कालं व्याप्य ।
36. प्रकृष्टतयोत्थिते ।
37. मोह एव प्रभुभूमिः प्रभुपदं, तत् मोहयतीति ; चपला आख्यातं नाम यासां, ता एव अलयः, तासां हृदः तद्वदस्थिरेति भावः ।
38. चन्द्रसम्बन्धिनी कला क्षयिष्णुः ।
39. हरिः + रम्या ।

* तुलनीयः, रसिकप्रिया—६-२७
† " " ६-२८
§ " " ६-२९

अथ विभ्रमहाव-लक्षणम् ।

वाग्भूषा-प्रेमतो यत्र वैपरीत्यं हि सम्भवेत् ।
रसभाग्बहिरन्तश्च दर्शनात्तत्र विभ्रमः ॥३४॥*

अथ राधिकाविभ्रमहाव-वर्णनम् ।

कट्यां हारमुरःस्थले च रसनां मञ्जीरमेवं करे
पादे कङ्कणमक्ष्णि यावकमथो गण्डेऽञ्जनं बिभ्रती
सा चेलाञ्चलदानविस्मृतिमती भूषन्त्यहो भूषणैः
श्रुत्वायान्तमिहोत्थिता व्रजमणिं राधेक्षितुं धावति ॥३५॥†

अथ श्रीकृष्णविभ्रमहाव-वर्णनम् ।

श्यामः खेलति कानने कृतवपुः-शोभः सुगन्धोदके-
राधाया हृदि वीक्ष्य विभ्रमरुचि[40]र्भसिन्यसौ[41] खादति ।
वीटीमञ्जदले विधाय निपतत्पर्णान्यबुद्ध्या हसन(न्?)[42]
गोप्यो मुद्रितमच्युतेन नयनं रोमाञ्चि नेत्राञ्चलम् ॥३६॥§

अथ विहृतिहाव-लक्षणम् ।

उक्तेः समय-मध्ये तु लज्जा[43]वक्तुं रुणद्धि यत् ।
हावो विहृतिनामायं कविराजैरुदाहृतः ॥३७॥‡

---

40. विभ्रमहावः (?)
41. श्रीकृष्णः ।
42. श्रीकृष्णोऽञ्जवीटीं ताम्बूलबुद्ध्या हसन् खादतीति दृष्ट्वा ।
43. लज्जेति कर्तृपदम् ।

---

* तुलनीयः, रसिकप्रिया—६-३०
† ,, ,, ६-३१
§ ,, ,, ६-३२
‡ ,, ,, ६-३३

अथ राधिकाविहृतिहाव-वर्णनम् ।

दग्धो(ग्धा?) तिष्ठसि मद्गुगिरोष्मणि हठात्[44] काष्ठं यथासम्भवं
प्रेमाब्धौ करतः[45] परस्य कुतुकान्निर्वाह[46]-यिष्यस्ययि ।
सर्वान्यो(ये?)ऽभिलषन्ति वक्ष्यसि हरिं स्मित्वा वच(:)[47] कर्हि च
प्रेयो-मानस-चित्रिता[48]-लयरुहा तत् पुत्तली स्थास्यसि ॥३८॥*

अथ श्रीकृष्णविहृतिहाव-वर्णनम् ।

राधाद्यानुयुयोज कृष्णमवददुदुर्वाच[49]माताडयत्
पाथोजेन यदेव हृत् प्रियतयाहीने[50]-यमामन्यते ।
सौख्यं प्राप्य ददौ च शिक्षितुमुरस्यानीय गन्धं नवं
को दातोत्तरमच्युतोऽल्पमकरोन्नीचान्न चोच्चं शिरः ॥३९॥†

अथ विलासहाव-लक्षणम् ।

खेलालोकनहास्योक्तिगतैरुत्पद्यते स्फुटम् ।
जले स्थले विलासो हि विविधः कथितो बुधैः ॥४०॥§

44. वाक्याग्निना दग्धं काष्ठमिव ।

45. 46. परस्य करात् ते निर्वाहो न भविष्यति ।

47. वचः इति साधुः पाठः ।

48 प्रियस्य चित्तचित्रशालायामङ्कितेति भावः ।

49 ईषदर्थे आङः प्रयोगः ।

50. तथापीयं प्रियत्वादहीनेति भावः ।

* तुलनीयः, रसिकप्रिया—६-३४

† ,, ,, ६-३५

§ ,, ,, ६-३६

अथ राधिकाविलसहाव-वर्णनम् ।

भालं हसेच्च तिलकद्युति-कैतवेन
भ्रूविभ्रमाश्च दधते [51]भवनस्य भेदम् ।
लोचनशोभमपि नर्त्तयती-क्षणानि
स्वान्तञ्च दन्तरुचितं चकितन्तनोति ॥४१॥*

अपिच ।

दासः कृतोऽस्मि मुखसौरभमन्दहासैः
श्यामोप्ययत्नमयि यद्यपि स प्रवीणः ।
चेतोऽच्युतस्य परिमोहयितुं ममालेऽ-
नन्तव्रतं[52] तव मुखं सुखतो हि निन्ये ॥४२॥†

अथ श्रीकृष्णविलासहाव-वर्णनम् ।

आलोकि यैः कलयितुं[53] किल यत्यते भोः
कुत्राप्यदर्शि[54]-मिरहो कथमीक्ष्यते च ।
गोपाल[55]देवनरकिन्नरनागयोषित्-
प्राणेश्वरो हृदि विहृत्[56] पतिदेवतानाम् ॥४३॥‡

51. भवनं = भावः, भावभेद इत्यर्थः ।

52. अनन्तव्रतम् = अनन्तचतुर्दशीव्रतमिति भावः, यत्प्रभावेन एतन्माहात्म्यजातमधिगतम् ।

53. गमयितुं, नोदयितुं वा ।

54. कुत्रापि न दृष्टवद्भिः ।

55. सम्बोधनपदम् ।

56. विहारकारी ।

* तुलनीयः, रसिकप्रिया—६-३७

† ,, ,, ६-३७

‡ ,, ,, ६-३८

अपिच ।

कृष्णेव-मङ्गमखिलं प्रतिमाऽस्य[57] ते य-
श्चोत्पादि कृत्स्नत इतो विदितो विधाता ।
एतच्च रूपमदमोवनमात्म[58]-जन्म-
प्रोन्माद-मोच्चि[59] वनिताव्रतमोचिते(ऽ?)क्षि ॥४४॥*

अथ किलकिञ्चितहाव-लक्षणम् ।

श्रमाभिलाष-भोगर्वस्मित-क्रोधमद[60](।?) स्तथा ।
युगपद् यत्र जायन्ते हावोऽत्र किलकिञ्चितः ॥४५॥†

अथ राधिका-किलकिञ्चितहाव-वर्णनम् ।

कस्मात् त्रस्यसि वीक्ष्य कं विहससि क्रुद्धा कृतभ्रूकुटिः
कस्मिन् विस्मरसि त्रपां क च कदास्यं गोपसे मेऽञ्चलैः ।
कैमा[61](?)पन्नयनापदं तव नये रुच्या[62] दशेयं न मे
मैवं भूश्च कदापि ( देवमधुना मय्येव नो ते लगेत् )
[63]दत्तमधुना तुभ्यं लगेन्नो मयि ॥४६॥‡

57. ते रूपस्य ।
58. आत्मभूः ।
59. प्रोन्मादं मोचयतीति, 'अक्षि' इत्यस्य विशेषणम् ।
60. मदाः (?) "श्रमोऽभिलाषो भीर्गर्वः स्मितं क्रोधो मद स्तथा" । इति साधुः पाठः ।
61. कस्यापदं त्वं गृह्णासीति भावः ।
62. अभिप्रेता ।
63. उभावेव पाठौ साधू ।

* तुलनीयः, रसिकप्रिया—६-३८
† ,, ,, ६-३९
‡ ,, ,, ६-४०

अथ श्रीकृष्ण-किलकिञ्चितहाव-वर्णनम् ।

एवं गोपकुलाङ्गना त्वनुगुणं दक्षं करोत्यक्षि या
दो[64]लन् हारलतासु खञ्जनसमश्यामा(मो?)ऽसि हृद्रञ्जन ।
उक्तः क्रुध्यसि नोदितो भ्रमसि वोदासीनवत्[65] ह(प्रो?)ल्लसन्
[66]साव्वं रूपमभूद्विषं च(व?)कथय भ्रान्तोसि कस्या रसे ॥४७॥*

अथ विच्छित्तिहाव-लक्षणम् ।

यत्र भूषयितुं भूषाद्रव्यैः स्यादुबहुनादरः ।
व्याख्यातस्तत्र विच्छित्तिहावो हि रसकोविदैः ॥४८॥†

अथ राधिकाविच्छित्तिहाव-वर्णनम् ।

निजेच्छयाकल्पिविभूषवेशो भवेद्वृथा भूषणवेश एषः ।
हरे भवेद् यत्र दृशो दिदृक्षा न सा गते भूषण[67] एत्ति(?)[68] तस्मात् ॥४६॥§

सुगन्धितः स्यात् सकलं सुगन्धि स्वतः सुगन्धो हि सुगन्धिजातौ ।
त्वयैव भूषा सखि भूषितास्यान्न भूषणैस्त्वं सखि भूषितासि ॥५०॥‡

64. हे हृद्रञ्जन ! त्वं हारलतासु (हासलतासु वा) दोलन् खञ्जनसमः श्यामोऽसीति भावः।
65. लस् क्रीडे, उदासीनवत् इतश्चेतः भ्रमसीति भावः।
66. सर्वस्मै हितम् रूपं विषमभूत्।
67. गते भूषणे।
68. एतीति साधुः पाठः।

* तुलनीयः, रसिकप्रिया—६-४१
† ,, ,, ६-४५
§ ,, ,, ६-४६
‡ ,, ,, ६-४६

अथ श्रीकृष्णविच्छित्तिहाव-वर्णनम् ।

नोष्णीषी पटवेष्टनी न हृदि किं कृत्वा पर्णा[69]-शनः(?)
कण्ठश्रीवनमाल्यहारमधरत् प्रोत्तार्य रुष्टो[70]-त्तम् ।
गण्डेऽलोपि[71] च चित्रितं मलयजै रुन्नीय लोकेक्षितं
लोप्यौ[72] वारय(?)रे कथं सहजसद्गन्धप्रकाशावयि ॥५१॥*

अथ बिब्बोकहाव-लक्षणम् ।

रूपप्रेमजगर्वेण कपटो(टा?)[73]-नादरो भवेत् ।
यत्र तत्रैव कथितो हावो बिब्बोकनामकः ॥५२॥†

अथ राधिकाबिब्बोकहाव-वर्णनम् ।

ज्ञात्वायातमशेत सास्तसशनैः कृत्वा हरिः साहसं
न्यस्तोरस्ककर स्तनू रुहरुचा तज्जागरं ज्ञापितः ।
नीवोहृत्व[74]-यमुत्थिताथ चकिता ज्ञात्वाह वाचं रुषा-
[75]हर्गोचारणयानयंस्त्वम[76]-वुधा(?) यास्यन्यशय्यां[77] निशि ॥५३॥‡

69. ताम्बूलास्वादनपरः ।
70 हठपूर्वकमिति भावः ।
71. अपाकृतम् ।
72. वावयवे (?) तेऽवयवे सहजसद्गन्धप्रकाशौ कथं लौप्यौ भवेताम् ।
73. कपटानादरः इति साधुः पाठः ।
74. तु + अयम् ।
75. रुषा + अहः ।
76. अवुधाः (?)
77. दिवा वनेषु गाश्चारयित्वा निशि अन्यशय्याम् अधिरोहसि ?

* तुलनीयः, रसिकप्रिया—६-४७
† „ „ ६-४२
‡ „ „ ६-४३

अथ श्रीकृष्णबिब्बोकहाव-वर्णनम् ।

एकां गोपवधूमुवाच किमपि स्मित्वैकदा माधवो
यद्दत्ता जनकै र्विहाय तमु किं नद्धो रसो[78] मत्सम् ।
का दाता[79] प्रतिवाचमत्र सखि तन्नेत्राम्बुकीर्णाधरा
हृन्नीता[80]-कुलिता तथापि न गता[81] हिक्काद्धराऽत्रावधि ॥५४॥*

अथ मोट्टायितहाव-लक्षणम् ।

यत्र स्यात् सात्त्विको भावो हेलालीलाकृतेः स्फुटः ।
भाति गद्गदवाग् यत्र हावो मोट्टायितस्त्विह ॥५५॥†

अथ राधिकामोट्टायितहाव-वर्णनम् ।

वासो दधत् खेलति कृष्ण आस्ते यत्र प्रियारत्यति-सुन्दरीयम् ।
केनापि दृष्टिः पतितास्य पृष्ठे [82]सुभासिरुच्या कुचकुङ्कुमस्य ॥५६॥§

मातुः समीपेऽथ जुगोप सम्यक् समुद्भवत् सात्त्विकभावमेषा ।
आपूर्य कर्पूरत ईक्षणाब्जं निर्व्वर्त्य सास्रं पिहिता निचोलैः ॥५७॥‡

---

78. पित्रादिभिः दत्तया सह का नाम प्रीतिरिति भावः ।

79. दास्यतीति भावः ।

80. हृदि वक्षसि नीता ।

81. हिक्कति कूजति अनया, अथवा हिगिति कृत्वा कायते शब्दायते, इति हिक्का ।

82. सुभसि = सुस्पष्टम् ।

---

* तुलनीयः, रसिकप्रिया—६·४४
† „ „ ६·४८
§ „ „ ६·४९
‡ „ „ ६·४९

अथ श्रीकृष्णमाट्टायितहाव-वर्णनम् ।

भुञ्जाना[83] वृक(ष?)भानुसंसदि सुखासीना हि नन्दो घना[84]
गोपा[85] भाति(न्ति?) बलोऽत्ति[86] तत्र रचयन् वीटीं हरो राधिकाम् ।
पश्यन्तीञ्च गवाक्षतोऽवकलयन्[86a] मूर्च्छन् पपातोच्चकैः
शब्देऽवेत्य भयादुवाच शनकै र्लग्नं गुवाकं गले ।।५८।।*

अथ कुट्टयि(मि?)तहाव-लक्षणम् ।

यत्र केलिरणे शोभी स्यात् केलिकलहः स्फुटः ।
तत्र कुट्टयि(मि?)तो हावः कथितो रसकोविदैः ॥५९॥†

अथ राधिकाकुट्टयि(मि?)तहाव-वर्णनम् ।

रुष्टादौ हठिता चलन्त्ययि मया सा दत्त[87]पृष्ठेक्षिता
त्वद्दृष्टा न[88] धृता [89]द्रुता-च्युतभुजैर्मोक्तुं भृशं चेष्टिका ।
शत्रूणां स्थितिलङ्घनो[90]रदनखाघातैरुरोजव्यथः
पर्णं भोजयती[91] म(त?)मालि कियती प्रेम्णो हि रीतिः परा ॥६०॥‡

---

83. भोजनपराः ।
84. घनाः सभायां सान्द्रा मिलिता गोपा चेति अध्याहार्यम् ।
85. भान्ति (?)
86. अत्ति = वीटीमित्यनेनान्वयः ।
86a. सस्पृहं पश्यन् ।
87. पृष्ठतः परावृत्त्यावेक्षणम् ।
88. त्वया न दृष्टेति भावः ।
89. धावन्ती इति भावः ।
90. शत्रुमर्यादातिक्रमणपरः ।
91. तथापि सप्रेम ताम्बूलं भोजयती आस्ते इति भावः ।

---

* तुलनीयः, रसिकप्रिया—६-५०
† ,, ,, ६-५१
‡ ,, ,, ६-५२

अथ श्रीकृष्णकुट्टयि(मि?)तहाव-वर्णनम् ।

आदान्मौनमवेक्ष्य यं कटुगिरं त्यक्त्वा [92]तदुच्चारिणो
सांमुख्यं शपथे कृते न कुरुते हृद्ये च न(?)[93]*ीक्षितम् ।
हाहाकृद्विजितो हरिः पदगतः पादाहतोऽयं यया ।
नीत्वाङ्कं किल तां समण्डति[94] मुखं प्रेम्णो हि भिन्नः क्रमः ॥६१॥*

अथ बोधकहाव-लक्षणम् ।

गूढभावस्य बोधस्तु यत्रान्यस्माद् भवेदिह ।
तत्रैव बोधकं हावं कथयन्ति मनीषिणः ॥६२॥†

अथ राधाबोधकहाव-वर्णनम् ।

आलीमण्डलमध्य अस्ति चतुरा राधाम्बुजं म्लानवन्-
नीत्वैकाथ नवा पुरोऽङ्घ्रिपतिता[95] गोपी च तच्चन्दनैः ।
सिक्त्वा पर्ण[96]-मदादियं सकरुणामुष्यै कपोलं ततो
लुप्त्वा[97] चन्दनचित्रमञ्जन[98]-चितं कृत्वा विदायं ददौ ॥६३॥§

---

९२. तन् मौनं त्यक्त्वा कटुगिरमुच्चारिणी ।

९३. 'न सूधे निहारे' इति रसिकप्रियायां पाठः ।

९४. भूषयति ।

९५. चरणपतिता ।

९६. ताम्बूलं ।

९७. चन्दनपत्रलेखामपाकृत्य ।

९८. कज्जलपूरितं कृत्वा । इदमत्रावधेयम्– म्लानाम्बुजेन विरहम्लानत्वं, पदपतनेन सकरुणं मिलनकामना, चन्दनलेपनेन कामज्वरोपचारः, पर्णदानेन चुम्बनप्रतिश्रुतिः, [illegible]न चन्द्रास्त-समये, अञ्जनरेखया अन्धकारेऽभिसरिष्यामीत्यादयो व्यज्यन्ते ।

---

* तुलनीयः, रसिकप्रिया—६-५३

† „ „ ६-५४

§ „ „ ६-५५

अथ श्रीकृष्णबोधकहाव-वर्णनम् ।

गोविन्दो द्युतिमादधद् व्रजसभासीनः सखीन्दु(?) यथा
पूर्णश्चित्तचकोरहृद्[99]विलसति न्युब्जं [100]ततोऽब्जं ददौ ।
कृत्वानीय नवाम्बुपूरितमहो काचित्त्वमुष्यै कथं
ब्रूहि प्रेक्ष्य शुभं विधाय कलिकां[101] कृष्णः पुनर्दत्तवान् ॥६४॥†

राधाया अपि कृष्णस्य हावाः प्रोक्ता यथामति ।
क्षन्तव्यं धाष्ट्यमेतस्य कविराजाः कवेरिदम् ॥६५॥*

इति श्रीमन्महाराज-रामजीवनराय-महाशयादिष्ट-श्रीमधुसूदन-कवीन्द्रविरचितायां
रसचन्द्रिकायां हाववर्णनं नाम षष्ठ आलोकः ॥

---

99. शोभते ।

100. न्युब्जीकृतम् ।

101. सजलकमलं मुकुलीकृत्येति भावः । अयं भावः—सजलकमलेन नायिकाया विरहाश्रुपातः, मुकुलितकमलेन रात्राविति ध्वन्यते ।

---

* तुलनीयः, रसिकप्रिया—६-५६

† ,, ,, ६-५७

# रसचन्द्रिका

## [ सप्तम आलोकः ]

अथाष्टनायिकानाम-कथनम् ।

स्वाधीनपतिकोत्का च तथा वासकसज्जिका ।
तथाभिसन्धिता नाम खण्डिता चापरा मता ॥१॥*

प्रोषितभर्तृका चैका विप्रलब्धाभिसारिका ।
अष्टैता नायिकाः प्रोक्ता रसविद्भिस्तु सूरिभिः ॥२॥†

अथ स्वाधीनपतिका-लक्षणम् ।

गुणवद्धः पतिर्यस्याः सार्धं तिष्ठति सर्वदा ।
प्रेमप्रसङ्गवर्णेऽस्मिन् स्वाधोनपतिकोदिता ॥३॥§

अथ प्रच्छन्न-स्वाधीनपतिका-वर्णनम् ।

कृष्णो यो व्रजजीवनः पितुरधिप्राणो न च भ्रामने
दे(दे?)वादेव-कुमारके यदुपरि प्रस्वा[1]विलम्बो लगेत् ।
लाक्षां तेन [2]दापयस्ययि परिष्कार्याङ्घ्रिके मूढ़जे,
स्मित्वा(त्या?) [3]मत्त्वसि रक्षितो[4]-त्तरयसे दृष्टे किमन्यैस्त्विह ॥४॥‡

---

1. यस्मै देवमानवकन्यासम्प्रदाने माता न संकुचतीति भावः ।
2. दापयसि + अयि ।
3. मत् + तु + असि ?
4. रक्षिता = मत्तः पुनः स्मितेन रक्षितासि, अन्यैर्दृष्टे किमुत्तरयस इति भावः ।

---

* तुलनीयः, रसिकप्रिया—७-२
† ,, ,, ७-१, ३
§ ,, ,, ७-४
‡ ,, ,, ७-५

अथ प्रकाशस्वाधीनपतिका-वर्णनम् ।

त्वां पात्र[5]-पर्णमिव चारु परिष्करोति
त्वन्मूर्त्तिरत्र मुकुरे हि यथा प्रविष्टा ।
ख्याता सदा परमुदारविलासमुक्त[6]-
त्वद्रूपसम्पदियमच्युतजीववृत्तिः ॥५॥*

अपिच ।

स त्वन्मनोरथभगीरथसद्रथस्य
गोपालको मम चलत्यनु [7]गाङ्गवार्व्वत् ।
किं वाक्यमीदृशममानिनय[8]-च्छ्रुतं मे
राज्ञि त्वदुक्तिरभवत् (च्छ्रु ?) श्रुति[9]-वागिवास्य ॥६॥†

अथोत्का-लक्षणम् ।

केनापि हेतुना प्रेयान यस्या धाम समेति न ।
तं शोचति सशोकान्तः सैवोत्का कथिता बुधैः ॥७॥‡

---

5. पर्णपात्रमिव (?)
6. उदारविलासार्थं मुक्ता ते रूपसम्पदिति भावः ।
7. गङ्गाया इदं गाङ्गं च तत् वाः वारि चेति तद्वत् । गङ्गाप्रवाहवदिति भावः ।
8. न कोऽप्यादेशस्ते तेनावहेलित इत्याशयः ।
9. वेदवचनम् ।

---

* तुलनीयः, रसिकप्रिया—७-६
† „ „ ७-६
‡ „ „ ७-७

अथ प्रच्छन्नोत्का-वर्णनम् ।

> किं गेहकर्म किमपै[10]-न्न सुहृत्समाजः
> किम्वा प्रभातत[11] उत व्रतवासरोऽद्य ।
> वार्त्ता त्वया न किमदाप्यथवा विरोधः
> केनाप्यभूत् किममले हृदि वा प्रबोधः ॥८॥*

अपिच ।

> देहे सुखं नमयि[12] किं कपटं प्रियत्वं
> भीतो घनेक्षणवशादथवापराधात् ।
> प्रेमप्रतीतिनयिता[13] मम किं यदाया-
> न्नाद्यापि केन वचसा च मनः प्रबोध्यम् ॥६॥†

अथ प्रकाशोत्का-वर्णनम् ।

> किं भ्रामितस्य भवति मतिभ्रमो वा
> वार्त्तामवाप्य किमयं भ्रमितो भ्रमेद् वा ।
> भीतो बभूव किमजायत मेलनं वा
> केनापि कापि वनिता रुचिता किमस्मै ॥१०॥‡

---

10. किम् + अपैत् ।
11. प्रभात + तसिल् ।
12. शरीरसुखं नानुभवामि ।
13. प्रेमप्रतीतिप्रत्यायकः ।

* तुलनीयः, रसिकप्रिया—७·८
† ,, ,, ७-८
‡ ,, ,, ७-९

अपिच ।

आयाति वर्त्मनि किमेत्य गतः किमेता[14]
दाता सुखस्य सखि सम्प्रति नन्दसूनुः ।
नैवाजगाम कथय किञ्चिदहो विचारा(त्?)[15]
कस्मादमुष्य समजायत वा विलम्बः ॥११॥*

अथ वासकसज्जा-लक्षणम् ।

भवेद् वासकसज्जा सा सविलासं विलोकते ।
या स्त्री रतिगृहद्वारं प्रियागमनकाङ्क्षिणी ॥१२॥†

अथ प्रच्छन्नवासकसज्जा-वर्णनम् ।

स[16]-च्चन्दनैक-विटपोपम-कोमलाङ्गी
स्वच्छोल्लसत्तरलवल्लताचकीर्णा ।
सा तत्र दीपशिखया सदृशी वृणीते
कान्तिं तनोरिह च नीलपटाञ्चलेन ॥१३॥§

अपिच ।

आलोकते सचकिता चकितं हि तत्र
स्यात् पत्रपक्षिपशुवाततरवो हि यत्र ।
कृष्णागमं च समवेक्ष्य हि कुञ्जजाले
बाला तदा चलति पञ्जरपक्षिगत्या ॥१४॥‡

---

14. एता = आगन्ता
15. विचारात् (?)
16. चन्दनवल्लरीसमा ।

---

* तुलनीयः, रसिकप्रिया—७-९
† ,, ,, ७-१०
§ ,, ,, ७-११
‡ ,, ,, ७-११

अथ प्रकाशवासकसज्जा-वर्णनम् ।

सख्या वक्ति सुखं** [17](वचो?) निदधती लक्षा [18]-(क्ष्या?)भिलाषान्मनो-
मध्ये [19]दृग्विल(ा?)साङ्गसौरभलसद्धास्यै र्मनोमोहिनी ।
वृन्दा मूर्तिमती रतिः किमु तथा वृन्दावने राजते
कुञ्जे कुञ्जकुटीरमध्य [20]-कलिता गोपीह लक्ष्मीरिव ॥१५॥*

अथाभिसन्धिता-लक्षणम् ।

मानदस्यापमानं या कुरुते माननोदने ।
तं विना द्विगुणं दुःखं लभते साऽभिसन्धिता ॥१६॥†

अथ प्रच्छन्नाभिसन्धिता-वर्णनम् ।

उक्ता यदा त्वमसकृन्न तदा विलासि (?)
प्रोक्षे [21] कथं विलपसीव शिशुः प्रवक्तुम् ।
पादे यथा स पततीह तथाश्मनो [22]-ऽपि
[23]पीनाकरो किमधुना नवनीतगात्रम् ॥१७॥‡

---

17. वचः (?)
18. दृष्टिलोमात् ।
19. भ्रूविलासः ।
20. विराजमाना ।
21. सिक्ते ।
22. प्रस्तरस्य ।
23. पृथुलः ।

---

* तुलनीयः, रसिकप्रिया—७-१२
† ,, ,, ७-१३
‡ ,, ,, ७-१४

अपिच ।

त्यक्त्वाखिलं सह रुषा रचितं प्रियस्त्वं
तां प्रोज्भ्य जीवनमृते किमु[24] याति जोव(:?) ।
एवं प्रिय[25] प्रियतमस्य न[26]मानिता हृत्
संमाननैवमु[27]-चितः किमु तेऽनुतापः ॥१८॥*

अथ प्रकाशाभिसन्धिता-वर्णनम् ।

तादृक् पादनतः प्रियः कथमपि न्यस्ता न दृष्टिर्मया
शिक्षैकापि न शिक्षिता तव सखि क्रोधस्य सा शिक्षिता ।
गन्धाब्जेन्दुनोलै र्ज्वलत्यपि तनु दुःखं सुखोनं त्वभूत्
प्राकार्षं विधिमन्यथा[28] यदुचितं धात्रा[29]कृतं चा[30]-न्यथा ॥१६॥†

अथ खण्डिता-लक्षणम् ।

आयातुमुक्त्वा नायाति प्रेयान् प्रातः समेति च ।
यस्या गृहं निरुक्ता सा खण्डिता रसकोविदैः ॥२०॥‡

24. जीवनं याति, अथवा 'जीव' इति सम्बोधनपदम् ।
25. प्रिय इति सम्बोधने ।
26. धैर्यं धर्त्तुमुचितः ।
27. श्रेयः ।
28. विपरीतम् ।
29. विधिविरचितम् ।
30. अन्यादृगभूत् ।

* तुलनीयः, रसिकप्रिया—७-१४
† ,, ,, ७-१५
‡ ,, ,, ७-१६

अथ प्रच्छन्नखण्डिता-वर्णनम्(?)।

अन्याद्वक् तव द्वक् किमद्य किमहो लाक्षारसै रञ्जिता
संमुग्धस्य हरे तवान्तिकतया लग्नोऽस्ति मोहो मयि।
मद्दिव्यं लघु मन्यतां[31] मयि हृदि क्रोधः स्म जागर्त्ति मद्-
विच्छेदानलतापिता(?) परिणतं प्रेमैव कस्यापि किम् ॥२१॥*

अथ प्रकाशखण्डिता-वर्णनम् (?)।

द्रष्ट्र्या[32] पश्यसि नो शृणोषि तु यथा त्वां वक्ति लोकोऽनु यं[33]
व्यस्मार्षी[34] र्बलिभुग् भ्रमन् व(र?)वि[35]धसीयान्न'[36] विचिन्वन् शठ।
नीचे स्थापयसीष्ट-द्रष्टिमपि चादत्से दुरुक्तः पदं
कुस्थानं वत वेत्सि सुस्थितितया ज्ञात्वान्त[37]-राप्तोऽसि तत् ॥२२॥†

अपिच।

कस्या नवाम्भोधरकान्त[38]-कान्ते कुत्रावसस्त्वं भवनं विहन्तुम्[39]।
उलूकवन्मे भवनं प्रवेष्टुं प्रभातकालेऽत्र समागतोऽसि ॥२३॥‡

31. न त्वया मच्छपथो गणनीयः।
32. दर्शनेन।
33. त्वां अनु वक्ति, तव पृष्ठतः किमपि अप्रियं वक्ति इति भावः।
34. विस्मृतोऽसि।
35. रविशाष्यकणान् (?)
36. गृहबलिम्।
37. मध्ये।
38. नवाम्भोधर इव कान्ता कान्तिर्यस्य तत् सम्बोधने।
39. गन्तुम्।

* तुलनीयः, रसिकप्रिया—७-१८
† ,, ,, ७-१७
‡ ,, ,, ७-१७

अथ प्रोषितभर्तृका-लक्षणम् ।

कस्मैचित् कर्मणे दत्वावधिं देशान्तरं गतः ।
यत्प्रियः सा हि तद्धेतो दीना प्रोषित-भर्त्तृका ॥२४॥‡

अथ प्रच्छन्नप्रोषितभर्तृका-वर्णनम् ।

कीदृक् प्राक्सुकृतैर्म्मनो नु[40] मिलितो भाग्योच्चयैरीदृशः
को जानाति बभूव किं यदवधेरह्नो व्यतीतेऽर्धके ।
स्मित्वाद्यापि पदानतं मम हरिं ब्रूषे सखीमं यतो
दग्ध्ये दृग्विरहानलेन नहि रुट्[41] तद्दारुणो दारुणाः ॥२५॥†

अथ प्रकाशप्रोषितभर्तृका-वर्णनम् ।

भुक्त्वा साम्प्रतमागतोऽहमिति तत् तस्यै स्वदत्तोऽवधि-
र्म्मिथ्याश्वास्य हि रक्षिता बत मया कृत्स्नेण चाद्यावधिम् ।
किं स्थित्या[42]-न्तिक ईदृशो व्रजसि नो गत्वापि कश्चे[43]द्वदेत्
वेत्स्यस्या नयनास्र(श्रु)निःसृतमिदं गच्छेन्निवृत्तिं पुनः ॥२६॥§

अथ विप्रलब्धा-लक्षणम् ।

सङ्केतमुक्त्वा यानेतुं दूती(तीं?) प्रेषयति स्वयम् ।
सन्तपत्यप्यनायाते प्रिये सा विप्रलब्धिका ॥२७॥*

---

40. मिलितम् । अकारान्तो मनशब्दः ?

41. क्रोधः ।

42. अन्तिकेऽवस्थानेन ।

43. यदि कश्चित् सन्देशमिमं तदन्तिकं वहेत्, तदा तस्या अश्रु कथमपि निवृत्तिं न गच्छेदिति भावः ।

* तुलनीयः, रसिकप्रिया—७-१९
† ,, ,, ७-२०
§ ,, ,, ७-२१
‡ ,, ,, ७-२२

अथ प्रच्छन्नविप्रलब्धा-वर्णनम् ।

पुष्पं शूलमिवाद्य मे सुरभि[44] यद् दुर्गन्धि का वा गृहा-
ण्यारामोऽपि महावनं ज्वर इव ज्योत्स्नाङ्गधग्[45]हृद्गतम् ।
प्रेम श्वापदवद् दुरुक्तिवदहो गीतं हि पर्णं विषं
वेशोऽलातमभूत् प्रियस्य घटिकां[46] कुत्रानुरागे[47] निशि ॥२८॥*

अथ प्रकाशविप्रलब्धा-वर्णनम् ।

दृष्ट्वेन्दुं स्ववपुश्च चम्पकदले सृष्ट्वा[48] लिखित्वा कियत्
क्षिप्त्वा गन्धक[49]-वीटिके स्रजमपत्रोट्यैव दूतीं प्रतो ।
दीर्घश्वासमुपेक्ष्य सा विलसितं कृष्णोन[50]-सङ्केतकं
सेवित्वाकुलिता[51] मदर्पितकरा लब्धाति[52]-दुःखं ययौ ॥२९॥†

अथाभिसारिका-लक्षणम् ।

प्रेमतः कामतो याति सङ्केतमधि या प्रियम् ।
[53]त्रिविधा वर्णिता रामा सा भवेदभिसारिका ॥३०॥§

44. साधुः गन्ध इति धरणिः ।
45. अङ्गं दहतीति अङ्गधक् ।
46. घटिकां यावत् ।
47. अन्यत्र कुत्राप्यनुरागे दृष्टे सति ।
48. विरचय्य ।
49. गन्धद्रव्यं ताम्बूलवीटिकं च दूरे क्षिप्त्वा ।
50. कृष्णेण ऊनं संकेतकम् ।
51. कातरा ।
52. अत्यन्तखेदं लब्धा ।
53. प्रेमाभिसारिका, गर्वाभिसारिका, कामाभिसारिका च

* तुलनीयः, रसिकप्रिया—७-२३
† " " ७-२४
§ " " ७-२५

अथ स्वीयाभिसारिका-लक्षणम् ।

या भीता पदमादत्ते वधूभिः सह सत्रपा ।
भूषणै भूषिताङ्गा हि सा स्यात् स्वीयाभिसारिका ॥३१॥*

अथ प्रच्छन्नप्रेमाभिसारिका-वर्णनम् ।

क्रीतो[54]हं तु यदा गतास्यनुदिता जानीहि मोहिन् घन-
श्यामाम्भोधरमालया किल समानीताहमुक्त्वा हरे ।
दृष्टं [55]दुःखमभूत्ततो यदिह नो दृष्टिः पतेद् विग्रहे
तत्राध्वा[56] कथमीक्षितो भवति भोः संदर्शितो[57] विद्युता ॥३२॥†

अपिच ।

पङ्के कण्टक उच्चनीचधरणौ पीडा भवेत् पादयो-
रास्ते साहस[58]-दन्तिवासव-गतिः सौख्यस्य दात्री परम् ।
एकाकिन्यसि राधिके भयकरे गाढं त्वमर्धे निशो
नैवं प्राणपते(ऽ)स्ति जीवनमयं [59]प्रेमा सहायः [60]सह ॥३३॥§

---

54. तव प्रेम्णा क्रीतोऽहमस्मीति भावः ।
55. दुःखमनुभूतमेव त्वया मदर्थम् ।
56. मार्गः ।
57. विद्युदालोकेन मया मार्गो दृष्ट इति भावः ।
58. साहस एव दन्तिवासवो गजेन्द्र स्तस्य गतिः ।
59. प्रेमा सहायः सह अस्ति ।
60. त्वयेति शेषः ।

---

* तुलनीयः, रसिकप्रिया—७·२६
† ,, ,, ७-२७
§ ,, ,, ७-२७

अथ प्रकाशप्रेमाभिसारिका-वर्णनम् ।

नेत्रातुरत्वमपि तथा चतुरत्वमास्ये[61]
गौरं तनो र्न च वृणोति गति-द्यु तिश्च,
गोपात्मजा-निजचरित्र-विचित्रितेयं[62]
सच्चित्रिणीव सह[63]भाति विचित्रचेताः ॥३४॥*

अपिच ।

आरुह्य[64] चन्द्ररुचिरा च तवैणचक्षुः
पल्यङ्कमुत्सहनतो[65] भ्रमतीह कृत्वा ।
पीत्वाम्बु पर्णमपि विभुज्य परश्च [66]कल्लि(ल्ये?)
प्राणप्रिया गतवती[67]श-(स?)रलैव गोपी ॥३५॥†

अथ प्रच्छन्नगर्वाभिसारिका-वर्णनम् ।

दुर्ल्लोलेरय लोललाल्य[68]-कुह(रा?)[69]-गुप्तो वपु र्लगयन्
सङ्गं नाद्य कथं ददासि शपथः कृष्णस्य पश्ये(श्यै?)त्य[70] च ।

---

61. मुखे ।
62. सौन्दर्यम् ।
63. सह शोभते ।
64. पल्यङ्कं, मनुष्यवाह्यदोलाविशेषमारुह्य ( पालकीति भाषा ) ।
65. उत्साहवशात् ।
66. गतदिने, प्रभाते वा । "ग्वालि काल की" इति रसिकप्रियायां पाठः ।
67. स्वच्छहृदया ।
68. 69. सुन्दरी श्यामली गृष्टिरय कस्मिंश्चित् कुहरे गुप्तेति रसिकप्रियायां स्पष्टम् । र० प्रि० ७।२९ ।
70. आगत्य पश्य ।

---

* तुलनीयः, रसिकप्रिया—७-२८
† " " ७-२८

आशूत्थाय चलैकिकागम[71]·मह' नेतु' समेत्याकुला
भ्रान्तो गोकुलनीवृतीश[72] कुरुषे गर्वं नु गाश्चारयन् ॥३६॥*

अथ प्रकाशगर्वाभिसारिका-वर्णनम् ।

घृष्टं चन्दनमर्पितं सुवसनं हारस्तथैवोरसि
स्वाकल्पः[73] परिशोभते सुमनसामानन्दकन्दो यथा ।
गाथां गायति वीणया तत इतो निक्षिप्तकोटी रति-
र्वाणी वाखिल-वन्दितेश[74]मृगजैर्मुक्तामरालै[75] स्तथा ॥३७॥†

अपिच ।

कोकीवोच्चलिता मुहुः सचकिता दूतीव[76] सापत्निकी
मन्दद्युत्यरविन्दवत् समभवद्दीना सपत्नी तथा ।
विभ्राम्यैव वियोगरूपतिमिरं चक्षुश्चकोरं तथा
[77]संफुल्य व्रजचन्द्र सा गतवती चन्द्रावली-[78]चन्द्रवत् ॥३८॥‡

71. अहमेकिका अगमम् ।
72. नीवृत् जनपदः तस्य ईशः ।
73. हार इत्यस्य विशेषणम् ।
74. ईश इति सम्बोधने ।
75. वाणीवाहनभूतैः ।
76. सपत्नीसम्बन्धिनी ।
77. उद्भाष्य ।
78. चन्द्र इव ।

* तुलनीयः, रसिकप्रिया—७-२९
† „ „ ७-३०
‡ „ „ ७-३०

अथ प्रच्छन्नकामाभिसारिका-वर्णनम्।

उद्यत्फणाधरफणाचरणाभिमर्द्रो(र्द्?)

हृदु[79](क्रुद्?)वीक्षसे निशिचरान् विविधान् समन्तात्।

वर्षद्घनध्वनिलगन्मुषला[80]-भधारा-

झिल्लीरवान् गणयसि त्वमहो नहीह ॥३६॥*

(अपिच?)

दीर्णांशुकं स्खलदलङ्कृति[81] कण्टके र्वा

(हृ?)कृष्टं न वेत्स्युव[82](र?) उरोजमनावृतञ्च।

प्रैतीति पृच्छति वधूरभिसारसारं

योगं[83] कुतस्त्वमभिसारकृतो[84]ह्यशिक्षः ॥४०॥†

अथ प्रकाशकामाभिसारिका-वर्णनम्।

गोपाः संसदि गोपि कोटि[85]-रुरवः सभ्यास्तथेहासते

चिक्रीता मुहुरीक्षितेन सवणौ[86] खेलन्ति बाला मिथः।

वक्त्रावृद्वसनान्तराशयविदो नार्यः समन्ताद् वृ(व्र?)ज[87]-

न्त्यायान्तीन्दुमुखं विवृत्य चलसि[88] कास्ते नु दृष्टि[89] र्न ते ॥४१॥‡

79. उद्यत्-फणाधरफणाश्चरणाभ्याममिमर्दनं करोतीति।
80. निरवच्छिन्नधारा।
81. स्खलन्ती अलंकृतिः यत्र तत्।
82. उर इति रसिकप्रियायां पाठः।
83. अभिसारसारभूतं योगसाधनम्।
84. हि अशिक्षः त्वमिति शेषः।
85. मृगाः, हिंस्रा जन्तवो वा।
86. पथि।
87. व्रजन्तीति साधुः पाठः।
88. ते दृष्टिः कुत्र वर्त्तते?
89. अपि वा ते दृष्टिरेव नास्ति?

* तुलनीयः, रसिकप्रिया—७-३१

† ,, ,, ७-३१

‡ ,, ,, ७-३२

स्वकीया वनिता या हि त्रिविधा वर्णितात्र सा।
परकीया द्विधैवा[90](व?)स्यादष्टधाप्यष्टधा च सा ॥४२॥*

त्रिधा तथा भवेदु योषिदुत्तमामध्यमाधमा।
त्रिषष्ठ्यधिकसंख्यत्रिशतोधा[91](?)प्रस्फुटाः स्त्रियः ॥४३॥†

अथोत्तमा-लक्षणम्।

अपमानान्मानकरी त्यजेन्मानञ्च मानतः।
प्राप्नोति या पतिं दृष्ट्वा सुखं सैवोत्तमा मता ॥४४॥§

(अथोत्तमावर्णनम्?)[92]।

किं स्यात् सम्प्रति बोधितेन नु तदा बुद्धं न सम्बोधनै-
रैकेनानृजुवीक्षितेन च महामान-स्त्वया वर्द्धितः।
ज्ञातृत्वं[93] न तु वेदये वि(त्वि?)[94]-यमवैत्याजन्म तत् संवद
त्वं निर्म्माय वचः सुमान्य[95]नय भो भूयो यथास्या[96]गतः ॥४५॥‡

90. परोढ़ा सामान्यवनिता च।
91. ३६३। रसिकप्रियायां तु ३६० भेदाः।
92. अथोत्तमावर्णनम्।
93. ज्ञानिता, चातुर्यं वा।
94. तु इयम् अवैति।
95. भो सुमान्य।
96. यथा आगतोऽसि तथा भूयोऽपि वचो निर्माय तामनुनयेति भावः।

* तुलनीयः, रसिकप्रिया—७-३३
† ,, ,, ७-३४
§ ,, ,, ७-३५
‡ ,, ,, ७-३६

अथ मध्या-लक्षणम् ।

लघुदोषेण या मानं करोत्यथ च मुञ्चति ।
बहु-प्रणतिभिः पश्चाद् विजे(ज्ञे?)या सा हि मध्यमा ॥४६॥*

अथ मध्यमा-वर्णनम् ।

भ्रान्त्या नेक्षितमेतया ऋजु हरि र्दीनः कियल्लालसा[97]
हाहाकूज्जित एष तिष्ठति पुनः पादे पतन् ह्यापतन् ।
[98]एतत्तावदहं विचारयामि यदितो गर्वः किमस्या इयान्
यच्चार्वक्षि[99] वृहद्दो कृशतनु धाता कचं लम्बिनम् ॥४७॥†

अथाधमा-लक्षणम् ।

असकृद् या भवेद्रुष्टा क्रुध्येच्च कारणं विना ।
अधमा सा समाख्याता विविच्य रसकोविदैः ॥४८॥§

अथाधमा-वर्णनम् ।

कृष्णे यत् कपटं कषायकुवचस्तच्छिद्यते चूर्ण्यते
वक्त्रावृद् व्यवधायि[100] दीर्य्यत इदं दृग् विध्यते याप्यधः ।
याः प्रेमोपहसन्ति शिक्षितकृतः सख्योपि [101]बध्या इमा-
वार्या[102]रुट् त्वसकृद्वियोगवशकृद्बुद्धिर्मया क्षिप्यते ॥ ६॥‡

---

97. न जाने कियती अस्य लालसास्ति मानिनीमेनां द्रष्टुम् ।

98. ?

99. वृहदिति चार्वक्षि-विशेषणम् ।

100 वक्त्रमावृणोतीति वक्त्रावृदवगुण्ठनं तत् व्यवधायि विभिद्य छिन्नमिति भावः ।

101. बध्याः प्रहर्त्तव्या ।

102. रुट् = क्रोधः ।

---

* तुलनीयः, रसिकप्रिया—७-३७

† ,, ,, ७-३८

§ ,, ,, ७-३९

‡ ,, ,, ७-४०

नायिका-नायकौ बुद्ध्वा वर्णितौ विधिनामुना ।
[103]जातिकार्य-वयोभावैस्तौ जानीयादनेकधा ॥५०॥ *

[104]सम्बन्धि-नृप-भूदेव-मित्राणां प्रोज्झ्य नायिकाः ।
दुःखश्वश्रुदुभ्रातृवनिता स्त्यक्त्वा हीनाङ्ग-नायिकाम् ॥५१॥ †

अन्त्यजाधिकवर्णानां योषितो विधवां तथा ।
त्यक्त्वा[105]-र्चितां च रसिका रमन्तां सुविचार्य हि ॥५२॥ §

इह संयोगशृङ्गाररीतिरेवन्तु वर्णिता ।
विप्रलम्भाख्यशृङ्गाररीतिः प्रीतिकरीर्य्यते ॥५३॥ ‡

इति श्रीमन्महाराज-रामजीवनराय महाशयादिष्ट-श्रीमधुसूदन-कवीन्द्रविरचितायां रसचन्द्रिकायां संयोगशृङ्गार-नाम सप्तम आलोकः ॥

103. पद्मिन्यादयः ।
104. सगोत्र-सपिण्डादि-सम्बन्धरहिता ।
105. पूजनीयां, देवोद्दिष्टां वा ।

* तुलनीयः, रसिकप्रिया—७-४१
† " " ७-४२
§ " " ७-४३
‡ " " ७-४४

## रसचन्द्रिका

### [ अष्टम आलोकः ]

अथ विप्रलम्भश्रृङ्गार-लक्षणम् ।

वियोगिमिथुने तत्र काले यो हि रसो भवेत् ।
विप्रलम्भाख्यश्रृङ्गारः कथ्यतेऽत्र मणीषिभिः ॥१॥*

अथ विप्रलम्भभेद-कथनम् ।

विप्रलम्भाख्य-श्रृङ्गारो भवेदत्र चतुर्विधः[1] ।
पूर्वानुरागः करुणा तथा मानः प्रवासकः ॥२॥†

अथ पूर्वानुराग-लक्षणम् ।

अनुरागो भवेद्योहि दम्पत्योः पश्यतो द्युतिम् ।
अदृष्ट्वा दर्शने दुःखं स हि पूर्वानुरागकः ॥३॥§

अथ राधिका-प्रच्छन्नपूर्वानुराग-वर्णनम् ।

शूलायते हि कुसुमं न च दर्शयैतत्
कृष्णं विना स्रगहिरित्थमिमां हरास्याः ।
नो चामरं कलयन[2]-व्यजनं तथास्या
झञ्झानिलस्त्विव लगत्यनिलः सुगन्धिः ॥४॥‡

---

1. पंचविध इति प्राचां मतम् ।
2. कलयनाय समीरसंचालनाय ।

---

* तुलनीयः, रसिकप्रिया—८-१
† „ „ ८-२
§ „ „ ८-३
‡ „ „ ८-४

अपिच।

नाधेहि गन्धमिह ताप इवारुहोऽङ्गे
वह्नि र्यथा लगति कुङ्कुमतो(न?) लिम्प।
छन्ना त्यजत्यसकृदन्यद[3]-पान(?)वैषा
वीटीं न भोजय चिषाय त एव[4] सास्याः ॥५॥*

अथ राधिकाप्रकाशपूर्वानुराग-वर्णनम्।

द्रष्टुं वस्तु कथञ्चिदिष्टमपतत् कृष्णेऽप्यतीष्टे हि दृक्
मच्चेतोऽन्यदः ततस्तद[5]-भवत् केनापि नैति(ती?)रितौ[6](?)।
वाग् यद्येति कियद्भविष्यति हसो[7] वेद्मि त्वमै[8]र्ब्बोधने
स्थाता मेलमृते कथं स भविता दृक्-प्रेम हद्धीः सखि ॥६॥†

अथ श्रीकृष्ण-प्रच्छन्नपूर्वानुराग-वर्णनम्।

राधा मातृसदै[9](है?)कदोपविशती सख्योघमध्येऽस्ति सा
दृष्टा यावदभूत् [10]सुमुन्मनसि या तादृग् वचस्येति न।

---

3. छन्नमतिरिव भूयो भूयो गृहाद् बहिर्निःसरति।
4. ते सर्वे एव अस्या विषाय एव।
5. तत् = प्रेम।
6. सन्दिग्धः पाठः।
7. यद्यत्र किमपि वचनं बहिर्यांति, ततस्तद् हासस्य कारणं भवेदिति भावः।
8. त्वं बोधने ज्ञातुम् ऐः = आगच्छः।
9. मात्रा सहेति भावः।
10. मनसि या सुमुद् = शोभनो हर्षः।

---

* तुलनीयः, रसिकप्रिया—८-४
† „ „ ८-५

तावद्विश्ववधू[11]-वचोऽस्य लगतोवानिष्टमा[12]-भ्राम्यति
हृच्च[13]-क्वारुह ईक्षिता क च न तद्वक्त्रद्युतिं नेक्षते ॥७॥*

अथ श्रीकृष्ण-प्रकाशपूर्वानुराग-वर्णनम् ।

यावच्चारुतयैव योजितवती राधा दृशा दृक् स्मिता[14]
नन्दाहृ(हू?)त[15]-वती स्मितेन च कियत् सद्भ्रूकुटी[16]-भीतिकृत् ।
सा तावद्यतिता कियत् कमपि नो कृत्वारुचिं वीक्ष्यते-
ऽशेषं वेशमृते विधु[17] गिलति सालातं चकोरी यथा ॥८॥†

( अथ दशदशा-वर्णनम् ) (?)

यत्रालोकात्तथालापा[illegible]कुलात्मता ।
दशा[18]दश भवन्त्यत्र विना मेलनमीरितम् ॥६॥§

11. सर्वासां वधूनां वचो लगति इव ।

12. अनिष्टम् = अभव्यम्, अरुचिकरम् ।

13. [illegible] (?) ।

14. स्मिता = प्रफुल्ला, दृक् = दृष्टिः ।

15. तावदेषा आहृतवती आकृष्टा ; अथवा आहूतवती समीपमानीतवतीति भावः ।

16. चारुकटाक्षेण भयमुत्पाद्येति भावः ।

17. तदा प्रभृति ममेयं वराकी दृष्टिः राधिका-मुखचन्द्रमप्राप्य चकोरी यथालातं गिलति, तथास्मद्धृदयजमानन्द[illegible]दिनं ग्रसति तद्विरहेणेति भावः ।

18. वक्ष्यमाणा दशधा दशाः ।

---

* तुलनीयः, रसिकप्रिया—८-६

† ,, ,, ८-७

‡ ,, ,, ८-८

अथ दशदशा-कथनम् ।

अभिलाषश्च चिन्ता च गुणोक्ति(:?)[19] स्मृतिरेव च ।
उद्वेगश्च प्रलापश्च [20]उन्मादो व्याधि[illegible] ।
भयश्च मरणञ्चैव प्रोक्ता दश[21]दशा इमे ॥१०॥*

अथाभिलाष-लक्षणम् ।

दृशा वाचा मिलंस्तिष्ठन् मेलितुं वपुषेच्छति ।
अभिलाषोऽयमुदितः कविधीरैः स वर्ण्यते ॥११॥†

19. गुणकथनम् ।
20. व्यभिचारिभावविशेषः । असन्धिदोषः ।
21. भयपदस्य दशात्वस्वीकारे दशानामेकादशता जायते ।

केशवदासस्तु :—
अभिलाष सुचिन्ता गुनकथन स्मृति उद्वेग प्रलाप ।
उन्माद व्याधि जडता 'भए' होत मरन पुनि आप ॥
"भए" इत्यस्य क्रियात्वस्वीकारे दशानां दशसंख्यकता निर्बाधा ।

(i) अभिलाषश्चिन्ता स्मृतिगुणकथनोद्वेगसंप्रलापाश्च ।
उन्मादोऽथ व्याधिर्जड़ता मृतिरिति दशात्र कामदशाः ॥ सा० द० 3-190.

(ii) चक्षूरागस्त[1]दनु मनसः [2]संगति भावना[3] च
व्यावृत्तिः स्यात्तदनु वि[illegible][4]सोऽपि
निद्राच्छेद[5]स्तदनु तनुता[6] निस्त्रपत्वं[7] ततोऽनु-
न्मादो[8] मूर्छा[9] तदनु मरणं[10] स्यु र्दशाः प्रक्रमेण ॥ श० क० द्रु० Vol. II 698.

(iii) अथवा चकारः पक्षान्तरे । भयं जीवनशङ्का, पक्षान्तरेण मरणम् ; यतो मरणं न वर्णनीयमतो दशात्वप्रतिपादनाय भयपदमुपन्यस्तम् । मरणसम्बन्धि भयमिति भावः ।

* तुलनीयः, रसिकप्रिया—८-९
† ,, ,, ८-१०

अथ राधिका-प्रच्छन्नाभिलाष-वर्णनम् ।

हानि बुद्धितनूरुचोः(चां?) प्रतिदिनं प्रायेण संवर्द्धते
किञ्चित् स्वावृतकुक्षिदुःखमयि तद्वक्त्रं व्यनक्तीव तु ।
क्षुन्निद्रा दुःखविस्मरा[22]-व्यवसिति स्वान्तं ह्यु दन्ता[23]-ग्रहे
किञ्चिद् ग्रन्थिपतद्[24]गतं त्विव कथं दग्धा[25]भ्रमेत् सुन्दरी ॥१२॥*

अथ राधिकाप्रकाशाभिलाष-वर्णनम् ।

लगेद्दिदृक्षा यदि वीक्षसे तदा विलोकनेदास्यसि दुःखमन्वहम् ।
इहैव पश्यामि कथामिमां सखि निरीक्ष्य पश्याम्यधुना भवामि किम् ॥१३॥†

द्रक्ष्यामि संगोप्य यथास्य देहं द्रष्टुं स्वदेहन्तु तथा न दास्ये ।
आलोकितुं वञ्चयसेऽधुना मामालोक्य किं किञ्चिदहं नयिष्ये ॥१४॥‡

अथ श्रीकृष्ण-प्रच्छन्नाभिलाष-वर्णनम् ।

आपन्नो(न्ना?)[26]श्चरणानताहमधुना कुर्वात्मतुल्यां न तां
दृष्ट्या कृष्ण न तृप्तिरक्ष्णि च पुनर्यासि ह्य[27]दृष्ट्वा कथम् ।

22. अव्यवसितिः = अव्यसायः (?)

23. हि + उदन्ता = उद्गतो निर्णीतोऽन्तः यया सा, वृत्तियाजनीकृतेति भावः। क्षुन्निद्रादिकाः तथा विस्मृताः, स्वान्तं चाग्रहवशात् वृत्तियाजनीकृतमिति, रसिकप्रियायां स्पष्टम्। र० प्रि० ८।११

24. ग्रन्थितः किञ्चित् वस्तु पतत् क्षरत् सत् गतं किम् ?

25. अग्निदग्धेव इतस्ततो व्याकुला भ्रमेद्वा ।

26. चरणे आनता ।

27. हि + अदृष्ट्वा ।

* तुलनीयः, रसिकप्रिया—८-११
† " " ८-१२
‡ " " ८-१२

मय्युक्तं कथितं तदच्युत कथं प्रत्याय्यतां कोप्यहो
दग्धः स्या यदि[28] उष्णमस्त्यतिरुचिः कृत्वाद्धि[29](द्धं, द्धा वा?)शीतं
क्वचित् ॥१५॥*

अथ श्रीकृष्ण-प्रकाशाभिलाष-वर्णनम् ।

कोप्यस्त्यस्य हितो व्रजन् वहति तद्वायुर्व्व[30]हत्यस्य को
युक्तं तत् कुलटेति नाम कुलजाः सर्वा व्रजे लेभिरे ।
पश्यैतत् सखि वोक्षिते[31] सनिपुणं हेमेव वह्न्यर्पितं
कोऽयं वेत्सि सखीव[32]नो नु कथितं ह्यः कस्य सन्देशितम् ॥१६॥†

अथ चिन्ता-लक्षणम् ।

किं कृत्वा मेलयिष्यामि मिलितश्च हरिः कथम् ।
वशः स्यादिति चिन्ता हि विविच्य वर्ण्यतेऽखिलैः ॥१७॥§

28. न सन्धिः । असन्धिदोषः ।

29. अर्द्ध अद्धा वेति साधुः पाठः ।

30. को वायुरस्य वहति = अस्य कृष्णस्य कः कीदृग् वायुर्मनसः प्रवाहो वहतीति रसिकप्रियायां स्पष्टम् । र० प्रि० ८।१४ ।

31. वीक्षिते = वीक्षणे ।

32. सखीव नः सन्देशितं ह्यः कथितं नु ?

* तुलनीयः, रसिकप्रिया—८-१३

† „ „ ८-१४

§ „ „ ८-१५

अथ राधिका-प्रच्छन्नचिन्ता-वर्णनम् ।

स्वतनुघोक्षिते यस्मिन्नैवात्मीया भवत्यपि ।
करिष्याम्यात्मनात्मीयं कथं तमिति मन्यते ॥१८॥*

अथ राधिकाप्रकाशचिन्ता-वर्णनम् ।

प्रेमा भीतिरपि[33]क्षोतीश्वरयुगं सङ्कोचनं शोचनं
ख्यातं मन्त्रियुगं[34] विनोदविरहौ न्यस्तौ च[35] दन्तावलौ ।
कृत्स्नं चालयतेऽवलाकतरलत्वे[36]वाजिनौ द्वौरथः
ख्यातो(ऽ)नङ्गगति[37]र्मनोरथचयाः(यः?) पत्ते[38]-
गुणानाश्रिताः ॥१९॥†

अपिच ।

घोरोऽतिक्रम एष संनिपतितः सान्द्रो द्वयोः पक्षयो-
[39]भा(र्भा?)त्री कस्य जयः पराजयमहो कः कातरात्मेष्यति ।
गोपाला[40]-कलय त्वमत्र समये बाला परं मानसे
खेलां वै *शतरञ्जनामकलितामेषा रचित्वा दधे ॥२०॥‡

---

33. शतरञ्ज(?) क्रीडायां प्रेमा भीतिरेव च राजानौ ।
34. शोचन-संकोचने मन्त्रिणौ ।
35. विनोदविरहौ हस्तिनौ ।
36. कटाक्षतारल्ये वाजिनौ ।
37. मनोरथोऽनङ्गगतिः । नङ्गो जारो वा, अनंतगतिरिति, र० प्रि०.
38. पत्ते मनोरथस्य ।
39. र्भावी इति साधुः पाठः ।
40. आकलय(?) पश्येति भावः ।

* चतुरङ्गक्रीडा श० क० द्रु० Vol. II. 419-20.

---

* तुलनीयः, रसिकप्रिया—८-१६
† „ „ ८-१७
‡ „ „ ८-१७

अथ श्रीकृष्ण-प्रच्छन्नचिन्ता-वर्णनम् ।

निःशेषसौरभितनुः(?)[41] कदा ब्रुवाणा
प्रोत्पादयिष्यति भयं भृकुटीविलासैः ।
तद्भावि[42] कीदृशमह भ्रमिता हि यत्रै-
तत्सङ्गभाग् दृगनुरागसुभाग्य[43]-भाग्मे ॥२१॥*

अपिच ।

एवन्तु भाविक[44]-विताामदुरस्यपीयं
सेन्दुं स्वयं मृगमदञ्च पुनः कटाक्षम् ।
दीपान्तिके निशि विलोक्य रुचिं कथञ्चिद्-
उक्त्वा [45]सितास्य(श्व?)मिव चित्रितपुत्तलीव ॥२२॥†

अथ श्रीकृष्ण-प्रकाशचिन्ता-वर्णनम् ।

राधाया जननीं स्वयम्वरकथां काप्यालिराचालयेद्
देवाभान्[46] वृक(ष?)भानुरा[47]-ह्वयति चेत् सामान्यगोपात्मजान् ।

---

41. मात्राच्युतिः (?)
42. भावि = भविष्यति ।
43. सुभाग्यं भजते इति सुभाग्यभाग् ।
44. सन्दिग्धः पाठः ।
45. सिताश्वं चन्द्रमिव ।
46. देवकुमारसदृशान् ।
47. आकारयति ।

---

* तुलनीयः, रसिकप्रिया—८-१८
† „ „ ८-१८

दध्यान्मे हृदि केन च स्रजमियं बाला शुभैतत् समं
दद्यात् त्वत्सदृशालि[48]-मेतदखिलं जीवाः(वः?) कथं
[49]निर्व्वहेत् ॥२३॥*

अथ गुण-कथनम् ( लक्षणम् ? )

गणयित्वा गुणवृन्दं तनुरुचिमुक्तिविशेषं वर्णयति ।
इदमुदितं गुणकथनं मन्मथमथनं तदा विद्यात् ॥२४॥†

अथ राधिका-प्रच्छन्नगुण-कथनम् ।

कृष्णा नित्य-कुमारकीर्त्तियुत[50] एकोऽकीर्त्तिराजो विधुः
स्पृष्टं म्लायि च चम्पकं हरितनुः स्फीता मृदु ज्ञायते ।
बाहुः सन्मृदुपाणिरस्य जलभूनालं सकण्टं मतं
चारू[51]र्व्वक्षि हरेः स्मरस्य तु शरा दृष्ट्या रसेनोज्झिताः ॥२५॥§

अथ राधिका-प्रकाशगुण-कथनम् ।

किं जीवस्य मनोतिरञ्जि नयनं किं खञ्जनोऽस्याधरी[52](?)
किम्वा सा मधुरा सुधावदरुचिः किं दाडिमीया शुभा ।

---

48. आलिम् सखीम् ।
49. जीवाः = हे प्राणा इति सम्बोधने (?)
50. नित्यकौमार्ययशःश्रीमण्डितः ।
51. हरेरक्षि चारु सुन्दरम् उरु विशालञ्च ।
52. कि खंजनोऽस्य प्रियस्य नयनाभ्यामधरोऽपकृष्टतरः ? यद्यपि अधरपदस्य त्रिष्वेव लिङ्गेषु प्रयोगस्तथापि खंजनविशेषणत्वेन पुंसि प्रयोगः साधुः ।

---

* तुलनीयः, रसिकप्रिया—८-१९
† " " ८-२०
§ " " ८-२१

किं चन्द्रो मुखचन्द्र आलिरुचिरः स्मारं नु रूपं हरेः
पादाब्जं मृदु वाब्जमस्य नु तनुः प्राणाः प्रियस्य प्रियाः ॥२६॥*

अथ श्रीकृष्ण-प्रच्छन्नगुणकथनम् ।

वाच्यश्चेद् विधुरम्बुजं च[53] तमसा भृङ्गेन संद्रुह्यते
कोटीकष्टसहानि विल्वकणके सद्विद्रुमो[54] दाडिमम् ।
कोकाहीभकपोतकेशरिकाः[55] प्रोक्ताः कुरूपाः स्त्रिया-
स्त्वस्या अङ्गमतुल्यमित्थमुपमा तिष्ठत्यसौ केवलम् ॥२७॥†

अथ श्रीकृष्ण-प्रकाशगुण-कथनम् ।

मग्ना चक्षुषि राधिकारुचिरियं नो निःसरेत् केनचित्
मन्ये कुङ्कुमपङ्कतो[56]ऽङ्किततरा रागै र्गृहीता मम ।
लग्ना मत्तनुतैवम[57]-स्ति कलिता किं नीलचेलद्युति-
र्हस्ताम्भोजमुखोत्थिता हि मम हृन्मन्येऽ[58]म्बुजं जिघ्रति ॥२८॥§

---

53. तमसा = राहुणा ।

54. कणक-दाडिम-विल्व-विद्रुमादयः अस्या वर्णदन्तकुचाधरतुलत्वेऽगणितं दुःखं प्राप्तवन्तः ।

55. इभः, अहिः, कोकः, कपोतः, केशरी च अस्या गति-भुज-स्तन-कोटि-तुलनायामक्षमाः ।

56. मम रागैरङ्किततरेति भावः ।

57. मे वपुषः श्यामलिका तस्या वस्त्रे लग्ना किम् ?

58. हस्तधृतं लीलाकमलं ममैवान्तःकरणस्य प्रतीकम् ।

---

* तुलनीयः, रसिकप्रिया—८-२२

† " " ८-२३

§ " " ८-२४

अथ स्मृति-लक्षणम् ।

रोचते किञ्चिदन्यन्नो सर्वकर्म च विस्मृतम् ।
स्याद्यत्र मेलनाकाङ्क्षि मनो नाम्ना स्मृति र्हि सा ॥२९॥*

अथ राधिका-प्रच्छन्नस्मृति-वर्णनम् ।

नो रोचते वचनमीक्षितमेव हास्यं,
खेला न रोचत इवैधितमस्ति दुःखम् ।
सूक्तं शृणोति नहि बुध्यत एष मन्ये
कुत्रापि मोहजडितं हृदि वास्त्यमुष्याः ॥३०॥†

अपिच ।

अन्वेष्यतीव मनसोऽन्तरियं पठित्वा
गूढान् गुणानपि च मूढमति र्बभूव ।
लज्जां च का प्रकुरुते ह्युपचीणयेत् का
चक्रारुहं कियदिवास्त्यद[59]सीयचेतः(?) ॥३१॥§

अथ राधिका-प्रकाशस्मृति-वर्णनम् ।

मन्मेलतो हृन्मिलितो हि मोहनो
मनो न दत्से मयि मौनमौनतः ।
कियन्न सन्निर्वहतेऽधुना कथं
मनो रसे मज्जति मानदस्य तु ॥३२॥‡

---

59. सन्दिग्धः पाठः ।

---

* तुलनीयः, रसिकप्रिया—८-२५
† ,, ,, ८-२६
§ ,, ,, ८-२६
‡ ,, ,, ८-२७

अपिच ।

सतीति[60] जीवेः कथमेव पर्णं
खादस्यहो नो पिवसि[61]त्वमम्भः ।
कुर्यास्तदा किं यदि कोऽपि विद्यात्(न्?)
न शोचनं संकुचितं न कुर्याः ॥३३॥*

अथ श्रीकृष्ण-प्रच्छन्नस्मृति-वर्णनम् ।

कर्पूरान्वित-चन्दनाङ्किततनोः सत्पुष्पितं लोकितं
ना(कु?)[62]-ञ्जश्च प्रतिकूल[63]-माजनि हरेस्तत्रैसि कुत्रोदितः ।
भ्रान्त्येव भ्रमतीति मन्यत उत(तो?)भ्रान्तो भवत्-संभ्रमात्
जाने [64]कैम(कस्य?)सुहारडोरकलितो दे[illegible]ार्ययम् ॥३४॥†

अथ श्रीकृष्ण-प्रकाशस्मृति-वर्णनम् ।

वासोऽभूच्च विषं सुगन्ध्यहिसमा शय्येह ते नो हृदा
ज्योत्स्नाञ्चेव चितेन्दु[65]-चित्रकमहो पर्णश्च नो खादति ।
त्यक्ते हास्य-विलासिते स्वपिति नो पानं कियन्नो पिवे-
दीदृक् सा कुलजा व्रजस्य च यया कृष्णः कृतस्त्वीदृशः ॥३५॥‡

---

60. इति सति = एवं सति त्वम् कथं जीवेः ?
61. त्वमम्भः नो पिवसीत्यन्वयः । श्रीराधिका-प्रच्छन्नस्मृति-वर्णनमिति, र० प्रि० पाठः ।
62. कुञ्जञ्चेति साधुः पाठः ।
63. प्रतिकूलं, यदेकदा सुखदम् आसीत् तदधुना दुःखावहं जातम् ।
64. कस्येति वा पाठः ; कस्य जनस्येति भावः ।
65. चित्रकं = तिलकं, चित्रकः = व्याघ्रविशेषः ।

---

* तुलनीयः, रसिकप्रिया—८-२७
† ” ” ८-२८
‡ ” ” ८-२९

अथोद्वेग-लक्षणम् ।

सुखदं यत्त्वनायासं जायते दुःखदं भवेत् ।
यत्र चैव तमुद्वेगं जानीयाद् दुःसहं बुधः ॥३६॥*

अथ राधिका-प्रच्छन्नोद्वेग-वर्णनम् ।

नो चन्द्रो विषकन्द इत्यु[66]गिलितो नीतः स नो राहुणा
पीतः पूत इति भ्रमाद्[67]घटभुवाऽपूतो न पक्वः कृतः ।
नामास्यैव सुधाधरो विषधरः शेषस्य कर्त्ता[68] विधिः
निर्धीरालि[69]रविं ब्रुवे हि किमयं पापो[70]स्वतुल्यः कृतः ॥३७॥†

अथ राधिका-प्रकाशोद्वेग-वर्णनम् ।

ह्यो दृष्ट्वा द्रुतमद्य वीक्षणमृते जीवा(वो?)नया[71] नश्यते
घस्र'[72]क्ष्वेडमिवातियापयति निज् ज्योत्स्नारुचि ज्वालयेत् ।
पल्यङ्काद् भुवि भूमितोऽत्र च सखो [73]कोटिः परं लालयेत्
किञ्चिद्भूषणमात[74]-राच्युत तदालोक्याङ्गतापं त्यजेत् ॥३८॥‡

---

66. गिलितः = निगीर्णः ।
67. घटभुवा = अगस्त्येन अपवित्रोऽयं चन्द्रो न जीर्णीकृतः ।
68. कर्त्ता = स्रष्टा ।
69. निर्धीरालि = सम्बोधने ।
70. स्वतुल्यः = समानतेजस्कः ।
71. अनया जीवो जीवनं नश्यते ।
72. दिनं क्ष्वेडं विषमिव ।
73. कोटिः, संख्याविशेषः ।
74. आतर = आयच्छ ।

---

* तुलनीयः, रसिकप्रिया—८-३०
† „ „ ८-३१
§ „ „ ८-३२

अथ श्रीकृष्ण-प्रच्छन्नोद्वेग-वर्णनम् ।

हंसो घनानिव च पश्यति नो हसित्वा
हंसस्य रूपमपि नो पिवतीव मेघः ।
वाञ्छन्ति ने(नै?)व नलिनानि हृदा सुधांशुं
पद्मानि च स्पृशति नैव यथा सुधांशुः ॥३९॥*

अपिच ।

पद्माकरादपि वने[75] वनतोऽच्युतोऽत्र
स्पृष्ट्वा तडागमपि गच्छति नो तमालम् ।
कीदृश्यसौ युवतिरस्ति ननु प्रियस्य
श्रुत्वेदृशीं वत दशां क्षणतोऽपि जीवेत् ॥४०॥†

अथ श्रीकृष्ण-प्रकाशोद्वेग-वर्णनम् ।

संफुल्लश्च तमालमन्नु नयनो दृष्ट्वा हरिः कम्पते
भ्रान्तोऽयं भ्रमतीव वक्ति न वने किन्ते[76] तडागे गतः ।
चेद्दृष्टोच्छु[77]रुपैति वीक्ष्य तु हरिं नो दर्शयिष्ये[78]ऽधुना
लग्ना काद्य दिदृक्षुता त्वयि यदा न कापि कार्ष्णी[79]रुचिः ॥४१॥§

---

75. उद्यानात् सरः, सरस उद्यानमिति भावः ।
76. कदाचिदुद्याने कदापि तडागे वा गच्छति ।
77. दर्शनाभिलाषी ।
78. यदि द्रष्टुमिच्छसि स्वयमुपसर्प, मया दर्शयितुं न गन्तव्यम् ।
79. कृष्णसम्बन्धिनी ।

---

* तुलनीयः, रसिकप्रिया—८-३२
† ,, ,, ८-३३
§ ,, ,, ८-३४

अथ प्रलाप-लक्षणम् ।

भवत्यन्तर्बहिस्तापो भ्रमेदु भ्रमरवन्मनः ।
प्रियपक्षे वचो ब्रूते तं प्रलापं विदुर्बधाः ॥४२॥*

अथ राधिका-प्रच्छन्नप्रलाप-वर्णनम् ।

न प्रेम वैरमपि नैकपथो न चैक-
ग्रामो[80] न खेलितमहो कपटोपमं हृत् ।
नालापनं नयनदान-कुटुम्बिताश्च[81]
नो[82] गोत्रवत्त्वमपि नो किमहं ब्रुवे त्वाम् ॥४३॥†

अपिच(?)

आनीय दुःखमयि दत्तमहो सुखस्य
मध्ये हसामि च कथं कमहं ब्रुवे किम् ।
गोप्यस्त्रु पूर्णनयना हि वदत्ययीदं
पश्य त्वमेव किल मां किमुवाच कृष्णः ॥४४॥‡

अथ राधिका-प्रकाशप्रलाप-वर्णनम् ।

खेलाम्यालिषु मध्यगा[83] हरिरथ प्राया(त्?)कुतो[84] वेद को
दृष्टिर्नाक्ष्ण्यपतद्धठात्तु जगृहे पश्यान्यहं पृष्ठतः ।

---

80. न चैकग्रामेऽवस्थानम् ।
81. दानप्रतिदान-सामाजिकव्यवहारांश्च ।
82. समानगोत्रत्वम् ।
83. मध्यस्थिता सती ।
84. कस्मात् स्थानात् ।

---

* तुलनीयः, रसिकप्रिया—८-३५
† ,, ,, ८-३६
‡ ,, ,, ८-३६

लज्जायां पतितं हृदुत्थितवती तप्तास्मि[85]कम्पः पदे
त्वेतावत् क्रुधि[86] नावदं यदिति दृक्सम्बन्धतो रक्षिता ॥४५॥*

अथ श्रीकृष्ण-प्रच्छन्नप्रलाप-वर्णनम् ।

त्वां लीलांऽकगुप्तगण्डमपवार्यैश्लिष्ट हास्योदितै-
राज्ञातन्तु पलायिता गतवती चान्तःपुरं वीक्ष्य माम् ।
लग्ना द्रष्टुमभीच्छुता किमु रुची[87]रूपप्रलोभी हरि-
र्दिव्यन्ते [88]पितृगोरसीयमवदः का मां कपाटाश्रिता ४६॥†

अथ श्रीकृष्ण-प्रकाशप्रलाप-वर्णनम् ।

हास्यं मरीचिरिव मोहि मुखस्य गन्ध-
श्चन्द्रोपमो(मा?)तिविशदा त्विव रूपरेखा ।
वेणी यथा विरचिता ग्रथिता त्रिवेणी
स्नातीव मे किल मनोरथतापसोऽत्र ॥४७॥§

---

85. कथमपि लज्जादशात उत्थाय रोषेणातप्तास्ति, तेन च पादयोः कम्पो जातः ।

86. क्रुधि न अवदम् ।

87. सन्धौ इकारस्य दीर्घत्वम् ।

88. ते पितृगोरसीयं दिव्यम्, गोपानां गोरसान्नास्ति किंचित् प्रियतरम् ।

---

* तुलनीयः, रसिकप्रिया—८-३७

† ,, ,, ८-३८

§ ,, ,, ८-३९

अपिच ।

> स्नेहेऽक्षि मग्नमिव वीक्षितुमेव[89] रुष्टं
> भ्रूः कौटिलीव[90] च कुचौ हि यथोन्नतौ च ।
> देवीव धातृरचितेयमु[91]कस्य पुत्री
> गेहागतस्य तव कीदृशवाचमुचे ॥४८॥*

अथोन्माद-लक्षणम् ।

> सरोषमुत्तिष्ठति वोत्थितश्चलत्यवेक्ष्य तिष्ठन्नथ वक्त्रमीक्षते ।
> हसत्यथो[92] गायति रोदितीह यद् बुधास्तदुन्मादपदं वदन्ति हि ॥४९॥†

अथ राधिका-प्रच्छन्नोन्माद-वर्णनम् ।

> पश्यन्ती चकिते च कम्पत उरश्छायेक्षणोत्कण्ठते
> वेत्त्यन्यन्मुखतोऽन्यदीरयति साऽन्यान्या निमेषान्तरे ।
> लग्ना दृष्टिरुतानिलो[93] भ्रमिमगान्मन्ये कृतं केन किं
> किञ्चिद् वक्त्रपटं हरे घटपटौ नो वेत्ति राधा कियत् ॥५०॥‡

---

89. वीक्षितुं कृतहठमिव ।

90. कुटिलस्वभावेव ।

91. उ इति सम्बोधने ।

92. अथो, अव्ययपदम् ।

93. अनिलः, वायवीयभूताद्याश्रित इव । एतत्पद्योक्तलक्षणानि रसिकप्रियायां प्रकाशोन्मादलक्षणत्वेनोपवर्णितानि ।

---

* तुलनीयः, रसिकप्रिया—८-३९
† „ „ ८-४०
‡ „ „ ८-४२

अथ राधिका-प्रकाशोन्माद-वर्णनम्(?) ।

राधाव्यथा भवद्रुते ववृधे नितान्तं
मुक्तः कचः कटितटावधि लम्बतेऽनुः[94](नु?) ।
एकान्ततः स्थिरमहो नयनं विधाय
संलोकयत्ययि च केशव शुद्धबुद्धे ॥५१॥*

अपिच ।

संतर्क्य कुप्यति तनुं परिमोटयन्ती
तप्तातिवेल[95]-मुपचारचयेन[96] दग्धा ।
श्वासं[97](सदा?) सकसकेति(?) विचेतना सा
प्रेतैश्च[98] प्रेमभिरवेहि दृढं गृहीता ॥५२॥†

अथ श्रीकृष्ण-प्रच्छन्नोन्माद-वर्णनम् ।

गूढागूढवचः-प्रकाशि[99]वजरत्तल्लौकिकालौकिकं(?)
कर्हि[100] क्रन्दननृत्यगा(न?)हसकृत् सो(ऽ?)स्ति[101] त्यजन्
[102]ह्रीकषी ।

---

९४. अन्विति साधुः पाठः, अव्ययपदम् ; पश्चादित्यर्थः ।
९५. अत्यर्थमिति भावः ।
९६. विरहताप-शमनाय कृतोपचाराप्यधिकदग्धेव भाति ।
९७. विचेतना सा कदाचित् श्वासं सकसकेति(?) निःश्वास-प्रश्वास-परा भवतीति भावः ।
९८. प्रेमरूपिणा प्रेतेन गृहीतेति भावः । तृतीये पादे मात्राधिक्यच्युतिः ।
९९. संदिग्धः पाठः ।
१००. क्रन्दनं च नृत्यं च गानं च हसश्च तानि करोतीति ।
१०१. सोऽस्तीति, साधुः पाठः ।
१०२. ह्रीं कषतीति, निर्लज्जेति भावः ।

---

* तुलनीयः, रसिकप्रिया—८-४१

† „ „ ८-४१

कस्मै शोचति संकुचत्यपि न चेति वेक्षतेऽसौ[103]शवः
स्त्रैण्यं किं तु हरेः स्मरानिल इव प्रज्ञा कयाचिद्धृता ॥५३॥*

अथ श्रीकृष्ण-प्रकाशोन्माद-वर्णनम् ।

साम्नाक्षश्च चतुर्दिशं सचकितः स्वान्तः समालोकते
प्रेक्ष्य प्रेक्ष्य मुखं स तिष्ठति च सो धावन् परं गच्छति ।
हृत् शोचीव[104] तु मन्यते तनुरहो संकम्पते तप्यते
रोदित्येष परं हसत्यपि मुहु र्गीत्वा समुत्तिष्ठति ॥५४॥†

अपिच ।

याहि त्वामुपदर्शयामि च तदा लोके न मे चाभवद्
भीतिस्तद् भवतीमुपागतवती वक्तु ं सखि व्याकुला ।
यादृक् किञ्चिदसंगतं हरिरयं ब्रू तेऽद्य कामं तथा
नो कस्या अपि नामधेय[105]-मयते वक्त्रादहो निःसृतम् ॥५५॥§

अथ व्याधि-लक्षणम् ।

यत्रैवाङ्गस्य वैवर्ण्यं दीर्घश्वासोऽपि जायते ।
सास्रु नेत्रं तनुतापस्तत्र व्याधिरुदाहृतः ॥५६॥‡

---

103. शव इव असौ ईक्षते ।
104. हृत् शोची इव ।
105. अयङ् गतौ । नामधेयं वक्त्रान्निःसृतं सत् न गच्छेत् ।

---

* तुलनायः, रसिकप्रिया—८-४३
† „ „ ८-४४
§ „ „ ८-४४
‡ „ „ ८-४५

अथ राधा-व्याधि-वर्णनम् ।

त्यक्तोक्ति मृ‍र्दु वक्ति नेक्षत इयं किञ्चस्ति भग्ना मति-
नाप्येषा शृणुते(ऽ)प्यवैति न वचः प्रेमोत्थितं भौतिकम् ।
त्वां त्वामेव रटत्यसौ तव रटो लग्नो[106](हि?) तस्यामियं
पर्णं नास्ति पिबत्यपो न कलिता[107] कृष्णेन किं सोऽनया[108] ॥५७॥*

अथ श्रीकृष्ण-व्याधि-वर्णनम् ।

तत्रास्या स्तनुतापतापमलभे स्नाम्ये[109]-तदस्रै रिह
तत्रास्याः श्वसितै[110] र्ननूड्डीय इहास्म्य[111]स्योपचारै र्हि मा ।
श्रीकृष्णो वृक(ष?)भानुजैवमपि भो नैतन्निदानं लभे
किं जातं युगपद् द्वयोश्च न कथं मात र्न गत्वेक्षसे ॥५८॥†

अथ जड़ता-लक्षणम् ।

चैतन्यमत्र च भ्रान्तिं याति धी र्भवतः समे ।
सुखदुःखे च तत्रैव सुज्ञानै र्जड़तोदिता ॥५९॥‡

---

106. वर्णस्खलनमत्र लिपिकरस्य । हीति पादपूरणे ।

107. कलितं भेदितमिति शब्दरत्नावली । कृष्णेन सा भेदिता प्रतारिताऽथवा तया स प्रतारित इति रसिकप्रिया ।

108. अनया राधिकयेति भावः ।

109. अश्रुभिरवगाहामीति भावः ।

110. निःश्वासैस्तापमुड्डीयेत्यर्थः ।

111. अस्मि + अस्योपचारैः = शीतलोपचारैः ।

---

* तुलनीयः, रसिकप्रिया—८-४६

† ,, ,, ८-४७

‡ ,, ,, ८-४८

अथ राधिका-प्रच्छन्नजड़ता-वर्णनम् ।

शैत्यं भूरि खरै[112]-र्हिमे न खरता क्षीणा तनुः स्यात् खरं
जायेतात्र कृतश्च किञ्चिदितरन्निर्वाह्य नेष्ये कथम् ।
दृष्ट्या म्लायति चैव कामकलिकासौ किं करिष्येऽधुना
यामि क्वापि करोमि किं कथमियं जीवेत् कथं जीवये ॥६०॥*

(अथ)[113] राधिका-प्रकाशजड़ता-वर्णनम् ।

दृष्टयालो-लिपितस्तयासि मिलितस्त्यक्त्वा च मौनं गिरा
ध्यानेनापि हृदा मनस्यपि यथा दीनैः सुवर्णं हरे ।
तां केनापि तनौ मिलार[114]-मभवत्तद्यद्धि भव्यं स्थितं
पूर्णप्रेमसमाधितो[115](ऽ)तिमिलने त्वं किं मिले र्वा तदा ॥६१॥†

(अथ?)[116] श्रीकृष्ण-प्रच्छन्नजड़ता-वर्णनम् ।

शीतं स्यात् क्षणतो निदानकलनात् सर्वोपचारै र्वपुः
कुर्वे खण्डनमण्डने यदि तनो दुःखं सुखं नानयेत् ।
कृष्णोऽवैति न वा शृणोति क इदं मन्येत पृच्छामि किं
नीतो योगमयं नु कस्य विरहो ज्ञेया(यो?) रुजोनुः(णुः?)[117]
कथम् ॥६२॥‡

---

112. खरैः = घर्मैः ।
113. अथेति पदम् योज्यम् ।
114. मिल + अरम् = शीघ्रम् ; शीघ्रं तां मिलेति भावः ।
115. ०ऽतिमिलन इति भव्यः पाठः ।
116. अथेति योज्यम् ।
117. नुरिति सन्दिग्धः पाठः । रुजोऽणुरिति वा पाठः ।

---

* तुलनीयः, रसिकप्रिया—८-४९
† „ „ ८-५०
‡ „ „ ८-५१

(अथ)[118] श्रीकृष्ण-प्रकाशजडता-वर्णनम् ।

कृष्णोऽश्नात्यनिलं विहीनवसनप्राणो हि सर्वेन्द्रियं
शुद्ध्या साध्यमनः समाधिरसतो यावत् समं मज्जयन् ।
स्यात् सिद्धा नहि विश्रुतस्तदवधि प्रेक्ष्याङ्कं[119] नो नय
जीवं देहि वरं त्यजैष कुरुते पश्य त्वदर्थं तपः ॥६३॥*

अथ मरण-लक्षणम् ।

छलतो बलतो यत्र केनापि स्यान्न मेलनम् ।
पूर्णप्रेम-प्रभावेण तत्रानायासतो मृतिः ॥६४॥†

मरणं यत् कवीन्द्रेण वर्णनीयं न जायते ।
अजरामर उक्तो यः कथं प्रेमचरित्रतः ॥६५॥§

प्रथमे रमणीनां हि रतिः समुपजायते ।
दृष्ट्वा तदिङ्गितं प्रेमप्रकाशं कुरुते सखि[120] ॥६६॥‡

---

118. अथेति योज्यम् ।

119. अङ्कं = कलङ्कम् ।

120. सखीति सम्बोधने ।

---

* तुलनीयः, रसिकप्रिया—८-५२

† „ „ ८-५३

§ „ „ ८-५४

‡ „ „ ८-५५

अत्यादरातिलोभाभ्या[121]-मत्यासङ्गात्तथा सखे ।
साधूनामेव चित्तानि चञ्चलानि भवन्ति हि ॥६७॥*

सुभगोक्ता[122] मया पूर्वानुरागजदशा दश ।
येन स्याद्विधिना मानो हृद्यो(?)[123]-यं वर्ण्यते शृणु ॥६८॥†

इति श्रीमन्महाराज-रामजीवनराय-महाशयादिष्ट-श्रीमधुसूदन-कवीन्द्रविरचितायां रसचन्द्रिकायां विप्रलम्भशृङ्गारे पूर्वानुरागवर्णनं नाम अष्टम आलोकः ॥

---

121. अत्यादरश्चातिलोभश्च ताभ्याम् ।
122. सुभगैरुक्ताः ?
123. हृद्योऽयम् ? हृदि अयं वा ।

---

* तुलनीयः, रसिकप्रिया—८-५६
† ,, ,, ८-५७

## [ नवम आलोकः ]

अथ मान-लक्षणम् ।

पूर्णप्रेमप्रभावेण योऽभिमानः समुद्भवेत् ।
त[1](च्छ?)छवेः शोभयामानः कविभिः परिभाष्यते ॥१॥*

गुरुलघुमध्यमानं प्रकटयति मानिनो प्रियं प्रति ।
एवमपि च प्रकटयति प्रियाः प्रति च प्रियः सज्ञानः ॥२॥†

अथ गुरुमान-लक्षणम् ।

दृष्ट्वान्यनार्याश्चिह्नञ्च नाम श्रुत्वा च कर्णतः ।
तत्रैव गुरुमानो हि जायते कविनोदितम्[2] ॥३॥§

(अथ?)[3] राधिका-प्रच्छन्न-गुरुमान-वर्णनम् ।

श्रीकृष्णेन हि राधिकाद्य मिलिता विच्छेदमुच्छिद्य च
क्रोधं प्रोज्भय हि रूपराशिरतनोत् कृष्णो विलासै[4] रसम् ।
वस्त्रान्ते हृदि लक्ष्म वीक्ष्य नखरैः रक्ष्या-नमय्य[5] स्थिता
मन्ये संकुचितं विधु-भ्रम-वशात् फुल्लाब्जमालो[6](+?) तत् ॥४॥‡

---

1. तस्य छवेः कान्तेः शोभयामानः ।
2. कविनेत्युदितमिति भावः ।
3. अथेति योज्यम् ।
4. हासविलासादिभिः ।
5. आनमय्य = नमयित्वा ।
6. Lacuna ०मालेव(?) चन्द्राकारं नखक्षतं दृष्ट्वा कमल इव तस्या नयने मुदित इति भावः ।

---

* तुलनीयः, रसिकप्रिया—९-१
† " " ९-२
§ " " ९-३
‡ " " ९-४

(अथ) राधिका-प्रकाशगुरुमान-वर्णनम् ।

कृष्णं [7]पृछ(च्छ?)ति गोप्यसौ हि हसिता गायाद्य किञ्चिद्गुणं
गानेऽस्मिन् सखि कृष्णतः स्म[8] कथमप्याख्यैति[9] कस्या अपि ।
याम[10]-त्यादयति स्थिता मुखकरे तत्स्था हि सा वीटिका-
प्यस्त्र (?)[11]धास्याः सम(म?)क्षरै निरयते द्रागा[12]-तुराया दृशः ॥५॥*

अथ श्रीकृष्ण-प्रच्छन्नगुरुमान-वर्णनम् ।

प्रेमैवमीदृशमकल्पि(?)नुसत्यदिव्या-
मील्याक्षि[13] पश्य वद कस्य च पत्रिकेयम् ।
उष्णीशमध्य इयमापिहिते हसन्ती
काप्येव कागज(द?)-वपुः[14] शृणु भोः सभाग[15] ॥६॥†

जानासि जन्म जगति त्वमगाः पथीह
लोके त्वयावकलितास्ति कुकर्म[16]-वीथी
काकोलवत्[17] कटु किमीरयसि ब्रवीति
मन्दं विहस्य च हरिर्म्मधुरं तु मे स्यात् ॥७॥‡

7. पृच्छतीति साधुः पाठः ।
8. अतीतार्थकाव्ययपदम्, एतीत्यनेनान्वयः ।
9. आख्या नाम एति ; हठान् मुखान्निर्गच्छति, गोत्रस्खलमिति भावः ।
10. यां वीटिकामत्ति आदयति च ।
11. अक्षरैः सह संनिरयते इति भावः । 'समक्षरैरिति' साधुः पाठः ।
12. आतुराया अस्या दृशः अक्षरै नामाक्षरैः समम् अस्त्र अपि द्राक् संनिरयते इत्यन्वयः ।
13. अक्षि आमील्य ।
14. कागदवपुः = पत्रम् ।
15. सौभाग्यशालिनिति सम्बोधने ।
16. त्वयैव कुकर्म-परम्परा रचिता ।
17. काकोलः = गरल इति वैद्यरत्नमाला ।

* तुलनायः, रसिकप्रिया—९-५
† ,, ,, ९-७
‡ ,, ,, ९-७

[18]अथ प्रिय-गुरुमान-लक्षणम् ।

लोकसीमानमुल्लङ्घ्य प्रिया वक्ति यदा वचः ।
गुरुमान-स्तदा स्यात्तु प्रियस्य हृदयालये ॥८॥*

(अथ?) श्रीकृष्ण-प्रकाश-गुरुमान-वर्णनम् ।

स्वीयाग्र एव वदति स्वयमेव दोष[19]-
मुद्रां प्रकाशयति किं नगरीपथे हि ।
दृङ्[20]-मुद्रणे कथमपि प्रतियोजना[21]स्या-
न्निःसारयत्यपि विलोचन[22]-मस्त्रतः किम् ॥९॥†

श्यामोऽप्ययं च भवनेष्वनिशं विणायां[23]-(यं?)
घस्यन्तरे कलयते निबिडं हि चन्द्रम्[24] ।
कीदृग् ब्रवीषि कथयेदृशमुच्यते यत्
मूल्येन नीतमपि[25] वाक्यमिदं वदेत् किम् ॥१०॥‡

18. रसिकप्रियायां तु लक्षणमिदं श्रीकृष्ण-प्रच्छन्नगुरुमान-वर्णनात् पूर्वं सन्निविष्टम् ।
19. यदि वायमपराधी, तदा तस्या एव सविधे स्वयमेव वाच्यो दोषः ।
20. नेत्रनिमीलने ।
21. प्रतियोजना = विरोधः ।
22. अस्त्रतः = छुरिकयेति भावः ।
23. यं विनेति साधुः पाठः । यस्य विरहेणेति भावः ।
24. कर्पूरचन्दनादिकम् ।
25. पणक्रीतमपि ।

* तुलनीयः, रसिकप्रिया—९-६
† " " ९-८
‡ " " ९-८

अथ लघुमान-लक्षणम् ।

काञ्चिन्नारीञ्च पश्यन्तं पश्यति स्वेन चक्षुषा ।
शृणोत्यालीमुखाद्वापि लघुमानोऽत्र जायते ॥११.*

(अथ?) राधिका-प्रच्छन्नलघुमान-वर्णनम् ।

प्रेय(?)स्या[26]स्तव माननान्तरखिलं चातुर्यचातुर्यपि[27]
ज्ञेयं नौ सुखदुःखरोषहसितं कृष्णार्त्तिरस्या च न ।
मानो मान इदं किमु त्वनुमितं न स्यादिदानीं नरैः
शीतोष्णा[28] क्षणमध्यतोऽपि भवति च्छायेव साम्भोभृतः[29] ॥१२॥†

(अथ?) राधिका-प्रकाश-लघुमान-वर्णनम् ।

रोरुष्यते प्रतिमृषेष्ट[30] इयत् कथं भो
दृष्ट्यल्पपृष्ठ[31]-वितरैः सखि कस्य भूता ।
ह्यो मां प्रति त्वनुनिनाय हरि र्ह्य एव
किं नागमं त्वमभवो यदि गापि[32] भद्रा ॥१३॥‡

26. संदिग्धः पाठः ।
27. हावभावप्रकाश-नैपुण्यम् ।
28. छायेत्यस्य विशेषणम् ।
29. अम्भोदस्य ।
30. इष्टे = प्रियजने । प्रतिमृष क्षमस्व, इयन्न रोरुष्यत इति भावः ।
31. पृष्ठवितरैः = पृष्ठदर्शनेन विमुखीभावेनेत्यर्थः ।
32. सम्बोधने ।

---

* तुलनीयः, रसिकप्रिया—९-९
† " " ९-१०
‡ " " ९-११

(अपिच?)

अद्यापि भेदकृतयेऽस्मि च मध्यवृत्ति[33]-
रङ्गेऽन्तरैकरुचिता करवी(र?)वन्नो[34]।
उक्तिस्तवैव किमु कोऽपि प्रमाणमस्ति
दृष्टञ्च साक्षिणमहो किमु यासि प्रष्टुम् ॥१४॥*

(अथ) श्रीकृष्ण-प्रच्छन्नलघुमान-वर्णनम्।

आया यद्‌ गदितुं न मां वदसि तत् किं ते हि सर्वा त्रुटि-
र्दृष्ट्या [35]कर्णमृते कथं कथमपि ज्ञेयं च कै र्हृत् प्रियम्।
वेत्स्यत्तु[36] न पयो हिमं न कलिता क्षुद्रीति[37]रेतादृशी
द्राक्षा[38]-मात्तुमिहेष्यतेऽच्युत यतः कुञ्जे विहारी भवान् ॥१५॥†

अथ लघुमान-लक्षणम्।

ह्रिया न कुरुते यत्र प्रियोक्तं किमपि प्रिया।
जायते लघुमानोऽत्र कविराजैः स वर्ण्यते ॥१६॥‡

33. नायिकां प्रति सख्या उक्तिरियम्, "अद्यैवाहं मध्यस्था भुत्वा युवयोः कलहं दूरीकरोमीति" भावः।

34. Lacuna. "करवीर" इति साधुः पाठः, यथा करवीरकुसुमस्य बहीरक्तिमाभ्यन्तरे च शुभ्रता दृश्यते, तथा कृष्णस्य प्रेमापि बाह्याभ्यन्तरयो रूपद्वयं बिभर्त्ति।

35. दृष्ट्या कर्णं वा ऋते।

36. अत्तुं भक्षयितुं पातुं वा न वेत्सि।

37. क्षुदः = बुभुक्षायाः रीति विधिः।

38. आत्तुम् = आङ् समन्ताद् अत्तुमास्वादयितुमित्यर्थः। समन्तादर्थे आङः प्रयोगः।—कुञ्जविहारीत्यादिना वृक्षकुञ्जशाखासु विचरणशीलः शाखामृग इति धन्यते।

* तुलनीयः, रसिकप्रिया—९-११

† ,, ,, ९-१४

‡ ,, ,, ९-१२

[39](अथ) श्रीकृष्ण-प्रकाश-लघुमान-वर्णनम् ।

किं कर्त्तासि पुरोऽधुनेयददा(?)[40] दुःखं त्वमुक्ताकृते
हीतो भ्रान्तिमगात् कथञ्चिदपि तत् किं प्रेमहीना-भवत् ।
नाश्लिष्टं कथितं वचो न नवया[41]-पूर्य्याङ्कजाह्वे[42]कदा-
प्यापूर्याक्षि न दृष्टमद्य हि मनो नीत्वा कथं यास्यते ॥१७॥*

अथ मध्यममान-लक्षणम् ।

पश्यत्यन्य-स्त्रियं यत्र वदन्तं या वचः प्रियम् ।
मानिन्या मध्यमो मानस्तस्यास्तत्रैव जायते ॥१८॥†

(अथ) राधिका-प्रच्छन्न-मध्यममान-वर्णनम् ।

कृष्ण ब्रूहि निशोऽखिला[43]-स्त्वमनयः केन त्वदन्वेषणैः
रेखा केन तनौ तनुर्विलिखिता गन्तुं वने कण्टकैः ।
किञ्चिद्रक्तवदक्ष्यभूत् किमु भवच्छिच्छेद[44]-वह्न्यातपै-
र्हृद्गो[45]रचितो यदाल्पमनयद् वक्ष[46]-स्तदा सा प्रियम् ॥१९॥‡

39. अथेति योज्यम् ।
40. Lacuna. इयद् यददाः इति साधुः पाठः ।
41. नवया = तरूण्या ।
42. अङ्कश्च जिह्वा अङ्कजिह्वे ते आपूर्येति भावः ।
43. अखिलाः समग्रनिशः रात्रयः ।
44. विरहाग्निसन्तापैः ।
45. मनःप्रलोभनम् ।
46. वक्षः, नीधातो द्विकर्मकत्वात् ।

* तुलनीयः, रसिकप्रिया—९-१३
† „ „ ९-१५
‡ „ „ ९-१६

(अथ) राधिका-प्रकाशमध्यममान-वर्णनम् ।

यादृग् वाचयसीममैः[47] सखि तथा मद्वाचने गर्विता
भूत्वातो ह्यधुना न किञ्चिदुचितं वक्तुं वचस्तत्समम् ।
कृत्वा स्वोरुमनावृतां(तं?) स्वयमहो ह्योभि म्रियेतापि का
सर्वेभ्य[48]-स्तरलो हरि[49]-स्तु तरले[50]-दानीं ततः किं भवेः ॥२०॥*

अथ श्रीकृष्ण-मध्यममान-लक्षणम् ।

मानिनी मन्यते नैव जितः स्यान्मानयन् प्रियः ।
यत्र तत्र प्रियोरस्के भवेन्मानो हि मध्यमः ॥२१॥†

अथ श्रीकृष्ण-प्रच्छन्न-मध्यममान-वर्णनम् ।

शश्वन्न्यषेधि च मया मुकुरं हि नीत्वा
पश्यास्य[51]-माल्य[52]-लसतास्वसि मज्जयित्री ।
शोभां क्षणं च नहि पश्यसि सर्वथानु-
नीयास्मि किं नु विजितास्ति[53] न कस्य दोषः ॥२२॥‡

47. वाचयसि ;—इमम् नायकम् ऐस्त्वमागच्छः इति भावः ।
48. हरिः सर्वेभ्योऽपि तरलः निर्लज्जतमः ।
49. ५०. किमहमपीदानीं ततोऽपि निर्लज्जा भवेयम् ।
५१. आस्यं पश्य ।
५२. आलिः अनर्थरूपा याऽलसता अवसादः तासु । आलिरनर्थ इति हेमचन्द्रः ।
५३. तत्रैव मानदोषेण विजितासीति भावः ।

* तुलनीयः, रसिकप्रिया—९-१७
† „ „ ९-१८
‡ „ „ ९-१९

(अपिच)।

भद्रं कृतं नयद[54]·मानि सुखोपरोधो
दिव्यं हरेस्तव निवर्त्तयसे मनश्चेत्।
चेन्मन्यसेऽ(ह्य?)नुनये घननायकस्य
प्रेमानुरोध इह मान्तु तदानुनेष्ये ॥२३॥*

(अथ) श्रीकृष्ण-प्रकाश-मध्यममान-वर्णनम्।

मन्यस्वानुनयं हि मानिनि नु किं मानस्त्वुटेन्मानसा-
न्मानो येन न तन्मतं परिणमो[55]-ल्लङ्घासि गर्वस्य भृत्।
सापत्न्ये(त्न्या?)[56]-पनतं करिष्यति यदा सर्वाणि तुल्या[57] भवेः
श्रीकृष्णोऽनुनयेत् स्वयं कलय तत् स्यात्तेऽनुनेयः पुनः ॥२४॥†

समानो वर्णितो मानो राधाया माधवस्य च।
मानमोक्षं तयोर्वक्ष्ये शृणुत ज्ञानिनो हि तत् ॥२५॥‡

इति श्रीमन्महाराज-रामजीवनराय-महाशयादिष्ट-श्रीमधुसूदन-कवीन्द्रविरचितायां रसचन्द्रिकायां विप्रलम्भशृङ्गारे मानविरहवर्णनं नाम नवम आलोकः ॥

54. यत् सुखोपरोधो नामानि, तत् त्वया भद्रं कृतमित्यर्थः।
55. परिणमोल्लङ्घासि = सीमानमुल्लङ्घयितुमिच्छसि।
56. सपत्नीसमूहे ऽवज्ञानम्।
57. तदा त्वं सामान्यसखीतुल्या भविष्यसि।

* तुलनीयः, रसिकप्रिया—९-१९
† ,, ,, ९-२०
‡ ,, ,, ९-२१

# रसचन्द्रिका

## [ दशम आलोकः ]

अथ मानमोचनम् ।

प्रीतिं विधाय त्यजतो हि मानं
प्रियाप्रियौ तद्धि च वर्णयित्वा ।
संश्रावयाम्येव निशामयन्तु
श्रुता हि रीतीः षडिमाश्च सर्वे ॥१॥*

अथ मानमोचनोपाय-कथनम् ।

सामदान-भेद-प्रणति-श्रुतोपेक्षा च प्रसङ्गविध्वंसः ।
श्रुत इह दण्डोऽपि तत्र भवति विरचितेऽत्र रसहानिः[1] ॥२॥†

अथ साम-लक्षणम् ।

कथञ्चिन्मोहयित्वा हृद् यत्र मानं विमोचयेत् ।
उपायः साम-नामात्र व्याख्यातः कविभिः स हि ॥३॥§

(अथ) राधिका-सामोपाय-वर्णनम् ।

कृत्वाशाञ्च सुखस्य तिष्ठति सदा दद्यान्न दुःखं ततो
मानिन्ये(?) घनरुष्यते[2] भ्रममहो मत्वा स्वयं यो नयेत् ।

---

1. दण्डवर्णनेन रसहानि र्जायते, अत-स्तन्न वर्णनीय इति भावः ।
2. घनं गाढं रुष्यते कुप्यते जनायेति भावः ।

---

* तुलनीयः, रसिकप्रिया—१०-१
† ,, ,, १०-२
§ ,, ,, १०-३

एष त्वं त्वमसौ तनुद्वयमये शृण्वेकक जीवनं
मानो भेदनमूल[3]-मात्मकसमं स्वप्नेऽपि कार्यो न सः ॥४॥*

(अथ) श्रीकृष्ण-सामोपाय-वर्णनम्।

गीरे[4] तीरयसीति यत्र हि तदा द्रष्टुं समक्षेऽस्म्यलं
किं ते नैति पथा कदापि पदपीड़्[5]-यस्मिन् लगत्-कण्टकम्।
कुष्माण्डस्य शिशोः समानुदयतेऽङ्गुल्याः[6] प्रसारात्त्वयि
ज्ञात्वा किञ्चिदिदं कुरुष्व तदहं त्वं त्वं[7] तथाहं हरे ॥५॥†

अथ दान-लक्षणम्।

वचोरचनयामोह्य[8](ह्यं?)हृत् केनापि छलेन यत्।
मानो [illegible] किञ्चिद्दत्वा तद्दानमुच्यते ॥६॥‡

---

3. मानो भेदबोधजनकः, अतः प्रियाप्रिययो र्वस्तुतोऽभेदज्ञाने मानस्यावकाशोऽपि नास्तीति तात्पर्यम्।

4. गी वाग्, वचनीयमित्यर्थः, एति आगच्छति, लोकत इति भावः।

5. पदौ पीडयतीति पदपीड़्, कण्टकविशेषणम्।

6. अङ्गुलिदर्शनेन यथा कुष्माण्डपोतकः शुष्कतां यति, त्वमपि तथा यास्यसि वचनीयतया लोकाङ्गुलि[illegible]।

7. प्रकृत्यावयोरद्वयत्वमेव।

8. मोह्यं, मोहनीयमिति वा साधुः पाठः ; हृदित्यस्य विशेषणम्।

---

* तुलनीयः, रसिकप्रिया—१०-४

† „ „ १०-५

‡ „ „ १०-६

दानमादाय यल्लोभान्मानं मुञ्चति मानिनी ।
वेश्याया[9] लक्षणस्यातः प्रमाणं प्राप्नोति हि[10](सा?) ॥७॥*

(अथ) राधिकां प्रति दानोपाय-वर्णनम् ।

बन्धूकमेव मृदुला छदनातिशोणं
धाता चकार सुखदं प्रभुजीवनस्य[11] ।
शोभाधरोत्तमसुधाधर-माधुरीति[12]
दिव्याधरस्य तुलनामिदमाप नैव ॥८॥†

(अपिच?)

वक्षोभुवं मलयशैलसमं निशम्या-
लोक्याशयागमदुरो बलितालका [13]हि ।
बन्धूकमाल्यकमिदं भवितुं सुगन्धि
निर्गन्धमिच्छति मनाङ् नय कन्धरायाम्[14] ॥९॥‡

---

9. दानमिषेण मानत्यागस्तु वारवधूजनसाधारणः, प्रेमिका नायिकास्तावद्दत्तवस्तुलोभेन कदापि मानत्यागं न समाधत्ते ।

10. Lacuna सेति योज्यम् ।

11. प्रभुजीवनस्य = नायकप्राणानाम् ।

12. इदं हि बन्धूककुसुमं कथमप्यस्या रक्ताधरतुलनामधिरोहतीति भावः ।

13. बलिताः कुञ्चिताः ।

14. ग्रीवायामित्यर्थः ।

---

* तुलनीयः, रसिकप्रिया—१०-७

† „ „ १०-८

‡ „ „ १० ९

(अथ) राधिकां-प्रत्यन्यदानोपाय-वर्णनम् ।

मत्तेभेन्द्रसमं व्यदारयदहो यः स्थावरान् जङ्गमान्
कृत्वा बन्धनवेधने स बहुधा धात्रा ततो [15]मारितः ।
शुद्धेः साधनभू[16]-स्तदागम इदं हृत् साधु निर्णीतवान्
हृत्ते पावनमीहतेऽयमधुना हारो[17] विहर्तुं शुभे ॥१०॥*

(अथ) श्रीकृष्णं प्रति दानोपाय-वर्णनम् ।

पत्या-जगौ च हसिता मुहुरेकगाथां
रीतिं त्वमस्य च हरे वद बोधयित्वा ।
केनैकदाधरमधूत्[18]-पिवतो हि दम्प-
त्याकल्प्य दन्तकरजस्थलमत्र देहि ॥११॥†

(अपिच) ।

किं याचयेदिदमहो परिरम्भणं मद्-
दिव्यं त्वमत्र मयि रक्षसि गोपयित्वा ।
राधाधिकत्वमहमद्य किमीरयामि
स्वप्रेयसं स्वयमनैष्ट च मानयित्वा ॥१२॥‡

---

15. मारितः = हिंसितः ।

16. साधनभूः = साधनभूमिः ।

17. हारः = गजमौक्तिकमाल्यम् ।

18. उत्पिवतः = तस्यां गाथायामुपवर्णितौ दम्पती केन प्रकारेण कारणेन वा परस्पराधरं सस्पृहमुत्पिवत इत्यस्य रीतिं बोधयित्वा वदेति भावः ।

---

* तुलनीयः, रसिकप्रिया—१०-९

† „ „ १०-१०

‡ „ „ १०-१०

अथ भेद-लक्षणम् ।

सखीभ्यो हि सुखं दत्वा नयत्यात्मीयतां स्वयम् ।
ततः कुत्रापि यन्मानं मोचयेद् भेद एव स ॥१३॥*

(अथ) राधिकां प्रति भेदोपाय-वर्णनम् ।

संकोचन्ति हि रीतित[19]-स्तव सखी धाऽयोऽपि मातस्तु मे
वक्तुं स्यादुचितं तदर्थ[20]-मिह मां बद्ध्वा विधिस्त्वय्यदात् ।
मन्दं ब्रूहि विपन्नयास्मि विघटः[21] स्याद्येन भीतास्यतः
श्यामो मे नवनीत-कोमल उते(तै?)त्वेधः[22]-कठोरं वचः ॥१४॥†

(अथ) श्रीकृष्णं प्रति भेदापाय-वर्णनम् ।

कोचेऽ[23]स्ति क्रुधितो हरिर्बहुमितो बुद्ध(दुध्यू?)हितं वर्द्धयेच्-
चेष्टित्वा स्वमतं स्थितैन्न[24] तदुपायं स्याद्धनं मित्रता ।
तत्रा[25]-साविह रीतिरेवमुभतो दह्येत किं स्निह्यते
पृच्छाम्यै[26]-ष्यति सा प्रिया तव भवेत् किं मानने मानिनो ॥१५॥§

---

19. रीतितः = नियमेन ।
20. मददातते "व्याधिमेतं विधिरिति" पाठान्तरम् ।
21. विघटः = विच्छेदः ।
22. उत + एतु + एधः, काष्ठम् इन्धनं वेत्यमरः ।
23. सन्दिग्धः पाठः, का उचे(?) 'काहूँ कह्यो' इति र० प्रि० पाठः ।
24. स्थिता + ऐत् + न = सर्वानुपायान् चेष्टित्वाधुना स्थिता स्थिरा जातेति भावः ।
25. तत्र + असौ + इह रीतिः ।
26. पृच्छामि त्वामिति शेषः ।

---

* तुलनीयः, रसिकप्रिया—१०-११
† „ „ १०-१२
§ „ „ १०-१३

अथ प्रणति-लक्षणम् ।

अतिप्रेम-स्मरागोभिः प्रिया प्रियतमो हि यत् ।
ज्ञात्वा निपततः पादे व्याख्याता प्रणतिस्तु सा ॥१६॥*

(अथ) राधिकां प्रत्यतिप्रेमप्रणति-वर्णनम् ।

कृत्वा प्रेम तदप्यलोकि मुखतः पत्या तु पादेऽपि नो
सख्या मेऽपि विलोकितैः स्थितिकलङ्कीय[27]-प्रवाहो(ऽ?)वहत् ।
दत्ते शीर्षणि(?)[28]ह्यहेतुरपरः पृच्छामि कस्तिष्ठति
प्रायान्मानयितुं हरिः कथय तन्मानो[29]-पमानः किमु ॥१७॥†

(अथ) राधिकां प्रत्यतिकामप्रणति-वर्णनम् ।

त्वं वादितापि वचनं वदसि स्वयं नो
मां मारयस्ययि कियत् सखि वाचयित्वा ।
पादेऽपतत् स सखि विद्धि यदर्थमेव
स्वं जीवनं युवतयो ददते हि सर्वाः ॥१८॥‡

(अपिच) ।

उत्थाप्य कण्ठमयि मेलय संविहाय
क्रोधं कियत् समुपविश्य नभो निरीक्ष्यम् ।

---

27. स्थित्याः प्रेमावस्थायाः कलङ्कीयः जनापवादसम्बन्धीयः प्रवाहः प्रसरोऽवहत् ।

28. शीर्षणि दत्ते = वारं वारं प्रणतिभिः प्रसादयति, सन्दिग्धः पाठः ।

29. तत् कथय, अयं मानः किमु अपमान ? इति भावः ।

---

* तुलनीयः, रसिकप्रिया—१०-१४

† " " १०-१५

‡ " " १०-१६

नैतद्दिनद्वयमभूज्जगतोह कस्य
कृत्वान्यथा त्वमसि पातयितुं प्रवृत्ता ॥१६॥*

अथ राधिकां प्रत्यत्यपराध-प्रणति-वर्णनम् ।

भूत्वौदास्यवती दशा ननु दशादर्श्याह[30]-रायापयो
रात्र्यर्द्धा[31](र्ध?)जनि भूरि-बान्धववधूभिर्वा विनीता कियत् ।
धात्र्यस्थात्[32] परिबोध्य किञ्चिदधुना नाभूत् सखो शिक्षितं
कस्मान्मानिनि मानितं न तति[33] नो यावत् प्रियः पद्गतः ॥२०॥†

प्रियापादे निपत्यैव प्रेमतो मानयेत् प्रियम् ।
नापराधान्न कामात्तद्वर्णने हीयते रसः[34] ॥२१॥§

अतिप्रेमस्मरागोभिः प्रिया यन्मानयेत् प्रियम् ।
निपत्याङ्घ्रौ न तद्वर्ण्यं रसहानि[35]-र्भवेत्ततः ॥२२॥‡

---

30. अहः दिवसम् आयापय-स्त्वमिति शेषः ।

31. रात्र्यर्ध इति साधुः पाठः ।

32. धात्री परिबोध्य अस्थात् = धात्री यथाशक्ति बोधयित्वा निरस्तेति भावः ।

33. तति = तावत् परिमाणं, यावत् प्रियः पदानतो न भवेत्, तावत् परिमाणं तया मान कृतः, पदानते पुनः प्रिये प्रसन्ना जातेति भावः ।

34-35. सुरतापराधादिषु चरणपातादिना प्रियतमा-मानमोचनमेव रसपोषकम् ; विपरी तु रसहानिः । न कदाचित् प्रिया प्रेम्णः कामादपराधाद्वा प्रियपादे पतेदिति भावः ।

---

* तुलनीयः, रसिकप्रिया—१०·१६
† " " १०-१७
§ " " १०-१८
‡ " " १०-?

(अथ) श्रीकृष्णं प्रति प्रणति-वर्णनम् ।

निर्वाहो वरमम्बुनो झसमृते सोऽजीवतो जीवति
रुच्यं नान्यदृते यदेव कुरुते तद्रुच्यमत्राखिलम् ।
यस्यै मत्पदगः स्म सा पदगता नेयाङ्कमाश्लिष्य नो
स्वीये शिक्षय आयदम्बुजभुवे [36]स्वप्ने वरं नो ददे ॥२३॥*

अथोपेक्षा-लक्षणम् ।

मानमोचि वचस्त्यक्त्वान्यप्रसङ्गं ब्रवीति यत् ।
मानो मुक्तो यतो याति तदुपेक्षाङ्गमुच्यते ॥२४॥†

अथ राधिकां प्रत्युपेक्षोपाय-वर्णनम् ।

विद्युन्नहि स्फुरति किन्त्विह शस्त्रदीप्तिः
केकी न वा वदति सैन्यसमाज[37]-वन्दी ।
तद्दुन्दुभिर्न्नदति गर्जति यत्र तत्र
ह्रीलीन ईक्षणमिनो[38] न ददाति पश्य ॥२५॥§

---

36. अम्बुजालयां लक्ष्मीमभिप्रेत्येति भावः ।
37. नेयं केकापितु सैन्यसमाजस्थवन्दिजनस्य कातरोक्तिरियम् ।
38. इनः = सूर्यः ।

* तुलनीयः, रसिकप्रिया—१०-१९
† „ „ १०-२०
§ „ „ १०-२१

(अपिच)।

श्यामं सखायमरमिन्दुमुखि[39] प्रति त्वं
गत्वा सुखं कुरु विधाय सुखस्य सज्जाम्।
वाताश्वमम्बुद[40]-भटास्तमसो नृपस्य(।?)
रुह्य[41] भ्रमन्ति नभसीन्दुमिहेहमाना[42] ॥२६॥*

अथ श्रीकृष्णं प्रत्युपेक्षोपाय-वर्णनम्।

रुच्याहि[43] रीतिरपि भो निशि केतकीया
जात्य[44]-न्तरे वसति कृष्ण[45] नलिन्यथाक्ष्णाः।
नो माधवी मधु पिवन् किमपीक्षतेऽन्धः[46]
सेवत्यु[47]-पासवदुगन्धफली[48] निषेवी ॥२७॥†

(अपिच)।

वाचं ब्रुवेऽन्यमयि कृष्ण विलज्जसे किं
स्याद् यस्य हृच्च मलिनं त्वपितः स एवम्।

---

39. अरं=शीघ्रम्।
40. वात एव अश्वः, अम्बुदा एव भटाः।
41. आरोहणं कृत्वा।
42. ईहमाना = चेष्टमाना अनुसन्धानार्थम्।
43. रुक् रुची रुचयः समा, इत्येकार्थसंग्रहः। रुच्या = रोचनीया।
44. जाती = जातिपुष्पं, चमेलीति भाषा।
45. कृष्णः = कृष्णवर्णः भ्रमरः, नन्दनन्दनो वा।
46. अन्धः = गन्धान्धो भ्रमरः, रागान्धः कृष्णो वा।
47. सेवती = पुष्पविशेषः, श० क० द्रु० V. 410.
48. गन्धफली = चम्पककलिका इति भावप्रकाशे।

---

* तुलनीयः, रसिकप्रिया—१०-२१
† „ „ १०-२२

प्राणेश पश्य च गतिं विगतत्रपाले[49]-
भृङ्गीसमं मिलति(लितु?)[50]-मिच्छति यच्च जात्या ॥२८॥*

अथ प्रसङ्गविध्वंस-लक्षणम् ।

भयचित्तभ्रमौ यच्च जायेते तेन विस्मृतिम् ।
मानः प्राप्नोति यत् स प्रसङ्गविध्वंस ईरितः ॥२९॥†

(अथ) श्रीकृष्णं (राधिकां?) प्रति प्रसङ्गविध्वंसोपाय-वर्णनम् ।

केकी वक्ति न दोलितो[51]हि शपथं दत्तेऽतनोः किङ्करः
काचित् कुप्यति कामिनी स्मरनिशैषास्ये स कोपी भवेत् ।
गर्ज्जत्यभ्रघटेयमालि सुखदं सम्वाद्यते डिण्डिमो
मौनं कार्यमुषः[52] पुनस्त्वमधुना ब्रूह्याह्वये केशवम् ॥३०॥§

(अथ) श्रीकृष्णप्रसङ्गविध्वंस-वर्णनम् ।

काचित् शुकं कथयतीति च कोककारी[53]
धिक् प्रेम हृद्यपि[54] चतुर्गुणमाहितं यत् ।
म्लाना शुकी कमपि वक्तुमलं न दीना
संकोचितास्ति बत दुःखदृढाङ्गयष्टिः ॥३१॥‡

---

49. विगतत्रपालेः = निर्लज्जभ्रमरस्य ।
50. मिलितुमिच्छतीति साधुः पाठः ।
51. दोलितः = अतनोः किंकरो हर्षान्दोलितः सन् शपथं दत्ते ।
52. उषः = उषसि, सप्तम्यर्थे द्वितीया ।
53. कोककारी = कारी = कारिका, कामशास्त्रकारिकेति भावः ।
54. हृदि प्रेम चतुर्गुणमाहितमित्यन्वयः ।

---

* तुलनीयः, [illegible] —१०-२२
† ,, ,, १०-२३
§ ,, ,, १०-२४
‡ ,, ,, १०-२५

(अपिच)।

न्यायं कुरुत्थित इतश्चल भो ददामि
संमान्य सत्सु कलहः परिवर्द्धितोऽस्ति।
तन्मानितोऽपि परिवृत्य न मानितस्या-
दध्यापयत्(च्छु?) शुकमिदं चतुरो मुरारिः ॥३२॥*

देशकालध्वनिवचः[55]-कलध्वनिसुगानतः।
शोभासुगन्धैः सुखतो मानः संत्यजति ध्रुवम् ॥३३॥†

श्रुत्वाभ्रघोरनिनदांश्च मयूरनादा-
नालापमेव मधुरं मधुपव्रजस्य।
ज्योतिर्विलोक्य तडितामपि दीपदीप्तिं
शय्यां शुभां सुमनसां सदनञ्च वीक्ष्य ॥३४॥§

कर्पूरकुङ्कुमजगन्धसमं प्रसून-
गन्धो बभूव मिलितुं किमु संप्रफुल्लः।
हंसस्य रौति[56] मिथुनं ननु माननोनं[57]
मानो विमुञ्चति हरेः सखि चैकवारम् ॥३५॥‡

---

55. ध्वनिवचः = ध्वनितार्थं वचः। गीतवाद्यध्वनि र्मधुरश्च वचो वा
56. रुतमित्यर्थः।
57. माननेनोनं मिथुनम्।

---

* तुलनीयः, रसिकप्रिया—१०-२५
† „ „ १०-२६
§ „ „ १०-२७
‡ „ „ १०-२७

अनेन विधिना मानं मोचयेन्मिथुनं स्वयम् ।
क्षणे क्षणे मुदं तच्च वर्धयेत् कविनोदितम् ॥३६॥*

प्रिया प्रियतमे नातिहठं कुर्या[58](त्?) कदाचन ।
हस्ते किमपि नायाति पुनरौदास्यमुद्भवेत् ॥३७॥†

वारं वारं न कुर्यात्तु कुर्यान्मानं तथा सकृत् ।
यत एव स्वयं तावत् सम्मानो वर्द्धते सदा ॥३८॥§

विना प्रीतिं[59] भयं न स्यात् प्रीति र्न स्याद् भयं[60] विना ।
प्रीतिर्भीस्तिष्ठतो[61] येन मानस्य रीतिरेव सा ॥३९॥‡

---

58. कुर्यादिति साधुः पाठः ।

59. प्रीतिरनुरागः ।

60. भयं = बहुमानम् ।
पूर्वाधिको गृहिण्यां
बहुमानप्रेमनर्मविश्वासः ।
भीरधिकेयं कथयति
रागं बाला विभक्तमिव ॥
'आर्यासप्तसती'

61. प्रीतिभीत्योरन्योन्याश्रयत्वेन प्रीतिः श्रद्धापूर्वको हि मानः ।

---

* तुलनीयः, रसिकप्रिया—१०-२८
† ,, ,, १०-२९
§ ,, ,, १०-३०
‡ ,, ,, १०-३१

[62]स्वत्यागाद्‌ व्यसनाद्‌ गर्वान्निष्ठुरोक्तेः प्रवासतः।
लालसा-विप्रियकृते प्रियौदास्यं[63] प्रिये भवेत् ॥४०॥*

नानाधीवसति[64]र्यत्र नानोक्तं मानमोचनम्‌।
विरहप्रव(वा?)सं[65] वक्ष्ये प्रोच्यैव करुणां कियत् ॥४१॥†

इति श्रीमन्महाराज-रामजीवनराय-महाशयादिष्ट-श्रीमधुसूदन-कवीन्द्रविरचितायां रसचन्द्रिकायां विप्रलम्भशृङ्गारे मानमोचनवर्णनं नाम दशम आलोकः ॥

---

62. स्वं = धनम्‌।

63. प्रियतमायां तटस्थता।

64. वसति र्वासः।

65. प्रवासमिति साधुः पाठः। विप्रलम्भशृङ्गारे प्रवासवर्णनमिति भावः।

---

* तुलनीयः, रसिकप्रिया—१०-३२

† ,, ,, १०-३३

# रसचन्द्रिका

## [ एकादश आलोकः ]

अथ करुणारस-कथनम् ।

यत्र सर्वसुखोपाय(यं?)स्त्यक्त्वैति करुणारसः ।
तत्रैव जायते यत्र स्वस्मिन्नाकुलता[1] तथा ॥१॥*

अथ करुणाविरहः ।

सुखमध्ये किमु दुःखं वर्ण्यं यथा वर्णनव्यवहारः ।
प्रसङ्गं तदपि लब्ध्वा मत्यनुसारेण वर्ण्यते किञ्चित् ॥२॥†

(अथ) राधिका-प्रच्छन्नकरुणाविरह-वर्णनम् ।

आलिर्धी[2]र्म्मिलितुं परं (च?)[3] मिलती तस्थौ मया प्रेषिता[4]
दूतीत्वाहन(नि?)[5]द्दृङ् मिलन्त्य(त्य?)नुदिनं तन्वा[6]दयालौ दशाम् ।
प्राणान् प्रेरयितुं तनूरसमयत्[7] कोऽन्यः प्रयोगो युजि
ह्योतो वक्ति न कस्य(वा?)[8] वच ऋते जानाति दुःखं परम् ॥३॥‡

---

1. यत्र सर्वसुखोपायं सर्वविधमिलन-सुखोपायं त्यक्त्वा करुणारस एति, तथा यत्र स्वस्मिन आकुलता, तत्रैव करुणारसो जायते इति तात्पर्यम् ।
2. धीरेवालिः ।
3. Lacuna. 'च' ।
4. नायकेन सह मे बुद्धिसखी मिलती एव तस्थौ, न च परावर्त्तते ।
5. दृग् दूती अहनि इत्वा मिलतीति भावः ।
6. तन्वाः = शरीरस्य ।
7. असमयत् = शफथं कृतवान्, यतः युजि मिलने अन्यप्रयोगाभावः ।
8. Lacuna. वेत्यव्ययपदं 'कस्य वच' इति पदद्वयमध्ये योज्यम् ।

---

* तुलनीयः, रसिकप्रिया—११-१
† „ „ ११-२
‡ „ „ ११-३

(अथ) राधिका-प्रकाशकरुणाविरह-वर्णनम् ।

चेतो हरं हरितहारमहं[9] जितैणा-
क्षि(क्षी?) प्रेक्ष्य दिक्ष्वपि न कुत्र लभे मुरारिः[10](रिम्?) ।
अभ्रं व्रजोपरि[11] च वर्षति वारिधारां
सोढास्मि दुःखमिह किं हरिरस्ति दूरे ॥४॥*

(अपिच)

दृष्ट्वा हृदाब्ज[12]-दृशमब्जम[13]-पोक्षणेन
स्यामब्जदृक्किमपरं गदितास्म्यहं भो ।
अम्भोघनाब्जशिति[14]-लौहघनाधिकेऽस्मि
स्थात्री कथं हरिमृते नभसो दिनेऽस्मिन् ॥५॥†

(अथ) श्रीकृष्ण-प्रच्छन्नकरुणाविरह-वर्णनम् ।

गत्वा यथा प्रथमतः श्रु(ति?)[15]-वर्त्मना हृद्
रत्यालयं मिलितमाल्यलके[16] चकार ।

---

9. जिता = प्रेमवशीकृता अहम् ।
10. मुरारिमिति साधुः पाठः ।
11. व्रजोपरि = हृदयोपरिवत् ।
12. अब्जदृशं = कमलनयनं श्रीकृष्णम् ।
13. अब्जं = सजलकमलमित्युपलक्षणेन कमलमपीति रसिकप्रियायां स्पष्टम् ।
14. अम्भोभिः घनं निविडमब्जं नीलकमलं, तद्वत् शितिलौहघने कालायसान्धकारे नभसो श्रावणस्य दिन इत्यन्वयः ।
15. Lacuna. श्रुतिरिति साधुः पाठः ।
16. आलेः सख्या अलके रत्यालयं रतेराश्रयभूतं मिलितं चकारेति भावः ।

---

* तुलनीयः, रसिकप्रिया—११-४
† „ „ ११-४

नेत्रं हृदीह मिलिते सविलासकान्ति-
प्रत्याशया भ्रमदतिष्ठदिदं[17] कपोले ॥६॥*

(अपिच)

दृङ्मीलने[18] हि मिलिताखिलचातुरीधी[19]
भ्रान्ताभवत्तनुरुचा परिहाय मानम् ।
प्राणास्तथा छलबलात् क्षणतः प्रयाय
यावन्त एव मिलितुं सह राधया च ॥७॥†

(अथ) श्रीकृष्ण-प्रकाशकरुणाविरह-वर्णनम् ।

तारुण्यं सरिदस्ति पूर्णमिह तत् पूर्वानुरागः पयो
वाञ्छासम्भ्रमविभ्रमभ्रमभयैः पूर्णोत्र पोतो महान्[20] ।
[21]शूलौघो हि तिमिङ्गिलाः पृथुतरस्तर्कैस्तरङ्गै-स्तथा-
स्ते किञ्चित् करुणो हरिस्त्वमधुनाकार्षी दयाम्भोनिधिम् ॥८॥§

अथ प्रवास-लक्षणम् ।

कस्मैचिद्यत्तु कार्याय परदेशे प्रियो व्रजेत् ।
कथयन्ति प्रवासं तं सव हि कविकोविदाः ॥९॥‡

---

17. इदं मे मनः ।
18. मीलने पक्ष्मभिरावरणे । दृशोर्निमीलने वा ।
19. चातुर्ययुक्तं ज्ञानम् ।
20. पूर्णा महानौरिवेति पाठान्तरम् ।
21. [illegible] ।

---

* तुलनीयः, रसिकप्रिया—११-५
† ” ” ११-५
§ ” ” ११-६
‡ ” ” ११-७

(अथ) राधिका-प्रच्छन्नप्रवासविरह-वर्णनम् ।

गन्तासीत्य कर्हि जीव[22] गतवान् कृष्णो महाभोस्तु मे
नो भीतोऽसि नियोजितोऽसि[23] च यतस्त्यक्त्वा च तं तिष्ठसि ।
न[24] त्वद्यूक्तमिदं विचारय कुतो मध्ये वियोगो हि यज्-
जीवेन(नाद्य?)[25] हि जीवसि त्वमधुना जीविष्यसीमं विना ॥१०॥*

(अथ) राधिका-प्रकाशप्रवासविरह-वर्णनम् ।

का प्रीतिकृन्न[26] न च का प्रियतो वियुक्ता
सङ्गीयते त्विदमपूर्वपतिव्रता त्वम् ।
यत्ने कृते करमुपैति तदेव भव्यं
किम्वान्यदालि परिधावति पक्षिपश्चात् ॥११॥†

उत्थाय याहि यदि कामपि मन्यत ना-
पद्धेत्ति यो हि मनुजः स हि वेद तावत् ।
अस्या हृदद्य[27]हि मिलाम्यथवा म्रिये[28]-ऽग्नि-
र्लग्नाऽस्तु कुत्रचिदवाप्यत[29] एव मातः (मेघः?) ॥१२॥‡

---

22. हे जीव = रे प्राणाः ।
23. दुर्बलोऽसीति भावः ।
24. त्वद्युक्तं = तवोचिताचरणम् ।
25. Lacuna. जीवेनाद्येति साधुः पाठः ।
26. का वा न प्रीतिकृत्, कापि प्रियतो वियुक्ता नेति नेत्याशयः ।
27. अद्य हृद् मिलाति ।
28. अथवाहं म्रिये ।
29. कुत्रचिद् अवाप्यते मेघ इति शेषः । अग्नौ लग्ने कदाचिन्मेघो वर्षति किम् ?

---

* तुलनीयः, रसिकप्रिया—११-८
† „ „ ११-९
§ „ „ ११-९

(अथ) राधिका-विरहभय(वि?)भ्रम--वर्णनम् ।

उत्तस्थौ हृदि केकि-कोकिल-रवात्(च्छू?) शूलश्च पङ्गु र्मतिः[30]
प्रोड्डीना तनुतूलवद् धृतिरभूत् सद्गन्धशीतानिलैः ।
(भ्रान्ता धीरिदमन्तरे [31]प्रतिनि) ज्योत्स्नां प्राणि[32]मिया न[33]यामकृदपि
भ्रान्तिं गता नाद्य धीः,
किं जीवामि करोमि किं विषमिवोत्फुल्ला विसिन्यन्तकृत्[34] ॥१३॥*

(अथ) श्रीकृष्ण-प्रच्छन्नप्रवासविरह-वर्णनम् ।

उक्त्वा सूक्तममूल्यमङ्गमखिलं क्रीतं यया केलितो
दृष्ट्या लालसि हृत् सुरूपममृतं यस्याः पिवज्जीवति ।
स्पृष्ट्वा यच्चरणौ करेण कलयन् सौख्यानि दुःखं जहौ
हृद्धिक्(ग्?) यन्न विखण्ड[35]-मुज्झदपि तत् सङ्गं स्फुटत्[36]
कोटिशः ॥१४॥†

30. मति र्बुद्धिः प्राप्ता ।

31. संदिग्धपाठान्तरम् ।

32. प्राणिभिया (?)

33. यामकृति अपि अद्य खलु शोषितसचन्द्रसमुद्रस्य मुनेरगस्त्यस्य जयघोषणया चन्द्रकृत-कदर्थनादात्मा संरक्षित, इति रसिकप्रिया ।

34. अस्या जीवनस्यान्तकृत् कमलिनी विषपुष्पिकेव प्रभाते फुल्लेति भावः ।

35. तत् सङ्गमुज्झत् त्यजद् अपि हृद् ।

36. कोटिखण्डेन ।

* तुलनीयः, रसिकप्रिया—११-१०

† „ „ ११-११

(अथ) श्रीकृष्ण-प्रकाशप्रवासविरह-वर्णनम् ।

कृष्णोऽध्वोपरि[37]यन् कथञ्चन पुनः सन्देशकोटिं वदेद्-
यावत् साहसमात्मनोऽग्रविधृतः पश्चात् क्षितौ पत्[38] पतेत् ।
ऊर्द्धः स्यादिव यत्र तत्र कलितः कापी(?)[39] हि वाङ्नो हि ते
प्रत्यावृत्र[40]जनह्रिया[41]-स्ति कुरुते क्रोशार्धके तु स्थितिम् ॥१५॥*

(अथ) श्रीकृष्ण-विरहभय(चि?)भ्रम--वर्णनम् ।

प्रेती(ता?)वत् परितो विलोक्य चलति प्रोन्मील्य तारोत्करान्
सङ्कोच्याब्जकरा ततः शिततनू रात्रि यथा[42] कुष्ठिनो ।
तर्ह्यं वामिलदाकलय्य हि गतेदानीं सुखोछा(च्छा)तिनी[43]
किं जीवामि करोमि किं वद निशागाच् छीणवक्त्रा पुनः ॥१६॥†

(अथ) राधिका-निद्रा-वर्णनम् ।

आयातेऽच्युत एष्यतीक्षणपुरः[44] क्रीतेव दोलन्त्यसौ
नो शेते शयितुं ददाति न तदा शय्यासहत्वं ददौ ।

---

37. यन् = गच्छन् ।
38. पत् = चरणम् ।
39. संदिग्धः पाठः । प्रत्यागच्छेति वक्तुं न पारयति ।
40. प्रत्यागन्तुमिच्छुः ।
41. जनह्रिया = लोकलज्जया ।
42. कुष्ठरोगाक्रान्तेव । संकोचिनी अब्जे एव करौ यस्या सा तथाभूता ।
43. सुखानां सप्तविधसुखानां उच्छातिनी उच्छेदिकेति भावः ।
44. ईक्षणयो र्नयनयोः पुरः क्रीता क्रीतदासीव ।

---

* तुलनीयः, रसिकप्रिया—११·१२
† „ „ ११-१३

भ्रान्तिं मे हि वदामि किं क्वचिदहो भूता[45] सपत्नी सखी
स्वार्थन्तु[46] ह्यखिलं हितं प्रवसति श्यामे हि [47]निद्राप्यगात् ॥१७॥*

(अथ) श्रीकृष्ण-निद्रा--वर्णनम् ।

कोट्योपायत एव संलगति सा नीता कथञ्चिद्धृदि
हृन्मध्ये चकितेक्षिते मयि शयाने तत्र जागर्त्ति च ।
कान्तान्यत्र न मे प्रमाणयति तत् को वेद कास्या गति-
र्निद्रा नव्यवधूवदक्षि जहती[48] गूढं निशीथे व्रजेत् ॥१८॥†

(अथ) राधिका-सखीपत्री श्रीकृष्णं प्रति—

नूनं वनेष्युपवने वनदेवतेव
श्रीमन् हरे विहरते वृक(ष?)भानुकन्या ।
श्रीवत् स्थिरा क्वचन तिष्ठति नैकधाम्नि
सन्दह्यते हि कमलैः कमलानु(ग्र?)जेव[49] ॥१९॥‡

---

45. कदाचित् सपत्नी सखीपदवीं यास्यति किम् ?

46. सर्वः स्वार्थं समीहते, इति भावः ।

47. श्यामे प्रव्रजिते निद्रापि प्रव्रजिता ।

48. निद्रा नववधूरिव अक्षि नेत्रं जहती त्यजती सती निशीथे अतिप्रत्यूषसि गच्छति ।

49. कमलानुजा = लक्ष्मीसहोदरा अलक्ष्मीरिति भावः, कमलाग्रजेति रसिकप्रियायां पाठः । कमला अनुजा यस्याः सा वा ।

---

* तुलनीयः, रसिकप्रिया—११-१४

† „ „ ११-१५

‡ „ „ ११-१६

(अपिच)

काल्यै[50] न केतकमिवाच्युत रोचते भू[51]-
जा रावणास्यमिव वीक्ष्य विधुं विभेति ।
उद्घाटितास्य[52] इव(?) कामसुयोधने सा
कृष्णेव[53] नाम मुखतो नयते तवैव ॥२०॥*

पुनर्यथा (?)

भृङ्गीव सा भ्रमति वेश्मवनेषु वीथ्यां
हंसीव हन्त वहते मुदुलं मृणालम् ।
प्रेयः प्रियेति रुवती वत चातकीव
तिष्ठत्यवाग् विधुमवेक्ष्य यथा चकोरी ॥२१॥†

(अपिच)

पश्येन्न केशरिवनं हरिणीव केकां
श्रुत्वा यथा विकलतां भजते भुजङ्गी ।
एवं तु रूपमवगाहत एव राधा-
मूर्तिः कुमारविरहेण हरे तवैव ॥२२॥‡

---

50. काल्यै केतकीपुष्पं न रोचत इति पौराणिकी प्रसिद्धिः ।

51. भूजा = सीता ।

52. उद्घाटितमपाकृतमास्यं द्रौपदीमुखावगुण्ठनं यस्मिन्नवसरे तस्मिन

53. कृष्णा = द्रौपदी ।

---

* तुलनीयः, रसिकप्रिया—११-१६

† „ „ ११-१७

‡ „ „ ११-१७

(अथ) श्रीकृष्ण-सखीपत्री राधिकां प्रति—

दीर्घां दरीं[54] न वसतीव हरिः करीव(च?)
संकल्प(म्प?)ते हरिमवेक्ष्य वनान्तरेपि ।
अहश्चकोर[55] इव संपदमीक्षतेऽसौ
कोकोऽधिकं विधुमिवास्ति निरीक्ष्य दुःखी ॥२३॥*

केकाश्रुते विलयमेति फणीव कृष्णो
घोरो घनस्तपति[56] भूरिजवासवत्तम् ।
भ्राम्यन्नलिर्व्वन इवास्ति निशीव योगी[57]
जागर्त्ति शाक्त[58] इव नाम जपत्ययन्ते ॥२४॥†

---

54. अनुपसर्गस्य वसः सकर्मकत्वमप्रचलितम्, रसिकप्रियायां तु वसत्येवेत्याशयः, द्वितीये पादेऽपि करी वनान्तरेऽपि कम्पत इत्याशयः स्पष्टः ।

55. चकोर इवासौ दिवसश्रियं न पश्यतीति भावः । अयमत्राशयः । अयं संकेतस्थलस्मृत्या निर्जने स्थातुं नाभिलषति, केशरकुंकुमादिकं दृष्ट्वा कम्पते, चकोर इव दिवसशोभां नावलोकते, तथा चक्रवाक इव चन्द्रं दृष्ट्वा दुःखी भवति ।

56. तपति = दुःखायते ।

57. योगी = सन्न्यासी ।

58. शाक्तः = तन्त्राचारी ।

---

* तुलनीयः, रसिकप्रिया—११-१८

† „ „ ११-१८

प्रवाससज्जा कथिता यथामति च वर्ण्यते।
राधाहर्योः सखीनाञ्च समाजो राधिकाहृतिः ॥२५॥*

इति श्रीमन्महाराज-रामजीवनराय-महाशयादिष्ट-श्रीमधुसूदन-कवीन्द्रविरचितायां रसचन्द्रिकायां विप्रलम्भशृङ्गारे प्रवासवर्णनं नामैकादश आलोकः ॥

---

* तुलनीयः, रसिकप्रिया—११-१९

# रसचन्द्रिका

## [ द्वादश आलोकः ]

अथ सखीजन-कथनम् ।

धात्री जनी नापिती च नटी च प्रतिवेशिनी ।
मालाकारी च ताम्बूली शिल्पिनी वलया(?) करी ॥१॥*

रामजानी सन्न्यासिनी पट्टसूत्रादिरञ्जिनी ।
एता नायिकयोः सख्यं सर्वकालं प्रकुर्वते ॥२॥†

(अथ) राधिकां प्रति धात्री-वचनम् ।

क्व व्याजाच्छतरञ्जनस्य स हरिः प्रोष्य स्थिताहर्निशं[1]
केनाप्याकलितेऽन्व(नु?)यासि[2] नु तदा प्रावेश्य रक्ष्या गृहे ।
त्वां शिक्षां सखि शिक्षयामि सुखदां तूर्द्ध्वभ्रू[3](?) दृग् घूर्ण्यते
दुर्लाल्या च न का क्व रूपमपि नो त्वं किं खमारोहसि[4] ॥३॥‡

1. अहर्निशं चतुरङ्गक्रीड़ाव्याजेन हरिणा सहोपविश्य स्थितासीत्यर्थः । हरिणा सह सहरि यथा स्यात्तथा वा प्रोष्य इत्यप्यर्थः ।

2. अन्वयासि, अनुयासि वा = गृहे प्रावेश्य रक्षणीया भविष्यसीति भावः ।

3. ऊर्द्ध्वौ भ्रुवौ यस्या स्तथाभूता दृक् घूर्ण्यते ।

4. किमाकाशमारोहितुमिच्छसीत्याशयः ।

* तुलनीयः, रसिकप्रिया—१२-१

† ,, ,, १२-२

‡ ,, ,, १२-३

(अथ) श्रीकृष्णं प्रति धात्री-वचनम् ।

कान्तं वयोऽल्पमिह दीर्घकचाक्षि[5]गौरी
गौर्यास्त्वसा[6]-वचतुरा गिरिजास्वसेव[7] ।
निर्माणपात्रकलिताप्यतिसूक्ष्ममध्या
प्रोत्तारितश्च परिकुन्द्य[8] किमङ्गमङ्गम् ॥४॥*

सद्गन्धि सौरभि वपुः सुधयैव सृष्टं
सिन्धूद्धृतेव किमियं त्रिदिवाद् धृताङ्घ्रिः[9] ।
अद्यानयानयहसोदितखेलमाने[10]-
ष्यामोव गोपवनिता स्मरकन्यकां श्वः(?)[11] ॥५॥†

(अथ) राधिकां प्रति जनी-वचनम् ।

कृष्णो रुवां घनवनं मम नव्यनव्या
नित्यं रूचि विघटते तनुरीक्षितैव ।
सद्गन्धवास[12] इह तद्विधिधं विलासं
विस्मृत्य साध्वसमहो कुरुताञ्च हासम्[13] ॥६॥‡

5. कचाश्च अक्षिणी च, दीर्घे कचाक्षिणी यस्या सा = दीर्घकचाक्षी चासौ गौरी चेति ।
6. तु + असौ + अचतुरा ।
7. पार्वतीभगिनी = रोहिणी ।
8. परिकुन्द्य = परितक्ष्य ।
9. त्रिदिवात् स्वर्गाद् धृतौ अङ्घ्री चरणौ यया सात्र धरण्यामिति भावः ।
10. अनयश्च हसश्च उदितं च खेलश्च तत् अनयहसोदितखेलम् आनेष्यमीत्यर्थः ।
11. कामकुमारिकेव (?)
12. सुरभिनिवासः ।
13. साध्वसं विस्मृत्यानन्दहासं कुरु, इत्यन्वयः ।

* तुलनीयः, रसिकप्रिया—१२-४
† „ „ १२-४
‡ „ „ १२-५

इक्षौ कियान् मधुनि वा मधुरो रसोऽस्ति
त्यक्त्वैमि यस्य निकटेप्यनजस्य धाराम् ।
सङ्गोप्य किं सुखितमीक्षणचारणाभि[14]-
र्यावन्न चारयसि हृत् प्रियहृत् प्रविश्य ॥७॥*

(अथ) श्रीकृष्णं प्रति जनी-वचनम् ।

स्याद्वक्तुमेवमुदितञ्च कथञ्चिदेवं
लज्जापटैर्म्मतिगतिः पिहितास्त्यमुष्याः ।
मद्वीर [15]सम्प्रति ममेह न चेयमेति
धात्री सहैव[16] कलिता लुठतीति जाने ॥८॥†

चेटी(?)दृशी ननु हरेऽस्ति तदीयचेटी
यस्याः पदे हि निपतन्मिलितस्त्वमासीः ।
जानेऽसि नन्दतनयो गदितुञ्च वेत्सि
तत्राप्यहो भवति सा [17]वृक(ष?)भानुपुत्री ॥६॥‡

14. गोपनकटाक्षपातेन कियत् सुखं स्यादिति भावः ।
15. मद्वीर, इति सम्बोधने ।
16. धात्रा सह गच्छतीत्याशयः ।
17. वृषभानुकन्येत्यर्थः ।

* तुल्नीयः, रसिकप्रिया—१२-५
† ,, ,, १२-६
‡ ,, ,, १२-६

(अथ) राधिकां प्रति नापिती-वचनम् ।

ना(न?)द्वारं त्वधुनाप्यगादनुलगित्वाकारणा[18]स्याश्च भो-
स्तत् कार्यं किमु जागरान्निशि [19]दिवा स्यात् किञ्चिद[20]-न्यात्मजे ।
स्यात् केनापि न चेत् स्थितिर्नहि सुखं सद्भाग्य[21]-कृष्णेक्षणाद्
गन्तुं यच्छसि किं दृगाग्रनिहितादर्शन किं रक्षसि ॥१०॥*

(अथ) श्रीकृष्णं प्रति नापिती-वचनम् ।

हृद्ध्रीभीश्च[22] सखी गुरुर्लघुवया नीत्वैव चित्तं चले-
दालोक्यो[23]-वुंरुदृक् गुरुच्छवि चिरं दत्ते सुखं सा बृहत् ।
सुज्ञानोरुरुचिस्त्वियं कथमपि त्वन्मिलिता हृन्मिले-
दार्यान्[24] वक्त्युरुदुःखगे हृदि महामानं चकारैद्वशम् ॥११॥†

(अथ) राधिकां प्रति नटी-वचनम् ।

यत्त्वां दर्शयितुं गतास्मि मम तद् ग्रीवां विवृत्याददो[25]
दृष्टीच्छालगदद्य का यदधुना गत्वा हरिं लोकये ।
दृष्टे शैत्यमदर्शने सखि भवेद्दाहोऽधिकत्वं त्विदं
रात्रौ सा गतिरह्निचेयमधुना वाक्यान्निवृत्तास्मि ते ॥१२॥‡

---

18. किमपि कारणं नाविष्कुर्वती त्वम् ।
19. रात्रिन्दिवं त्वदर्थं जागरणात् ।
20. कस्यचिदप्यपरस्य पुत्रे ।
21. भाग्यशालिनः कृष्णस्य दर्शनात् ।
22. हृदि स्थिता या ह्रीः लज्जा, भीर्भं चेत्यर्थः ।
23. आलोक्या = उरु प्रकामं यथा स्यत्तथा ; उरुदृक् = विशालनेत्रा ।
24. मान्यान् ।
25. अददः = अयच्छः ।

---

* तुलनीयः, रसिकप्रिया—१२-७
† " " १२-८
‡ " " १२-९

(अथ) श्रीकृष्णं प्रति नटी-वचनम् ।

ज्योत्स्नेव दीप्यत इयं ननु यत्र यत्र
सङ्गोप्यते यदपि केन च रञ्जनार्थम् ।
वाताध्वनालिमनु सा भ्रमरीव लग्ना
तादृक् सखी भ्रमति सङ्गरुचिस्तु यस्याः ॥१३॥*

सा दुर्म्मिला[26] परमहो मिलितुं तवेच्छा
किं मेलयामि न विहङ्गगतिर्म्मयीह
दत्ते द्युतिस्त्विह च दुःसहदुःखमेक[27]-
मङ्गस्य गन्धविषमत्र[28] भृशं द्वितीयम् ॥१४॥†

(अथ) राधिकां प्रति प्रतिवेशिनी-वचनम् ।

पल्यङ्के निहिते पदे तुलयितुं वृत्तासि रत्या रतिं
साम्मुख्यं शपथे कृतं तव गति नैवं स्थिता सम्प्रति ।
भूत्वा यं विकलेक्षितु[29] त्वमुषसो(सि?) मामेत्य[30] संपीडये-
स्तस्मै त्वं छलरोषवाक् कथमभूः पर्णाशनायां[31] निशि ॥१५॥‡

26. ऊर्मिला = तरङ्गिता, प्रकामं प्रसृतेति भावः ।

27-28. एकतस्तावदङ्गद्युत्या सा असंगोप्या एव, अन्यतस्तावत्तस्याः शरीरगन्धः कथमपि भाच्छादयितुमशक्यः ।

29. द्रष्टुं विकला विह्वला सती ।

30. प्रभाते मामभ्युपेत्य ।

31. ताम्बूलसेवनक्रियायाम् ।

* तुलनीयः, रसिकप्रिया—१२-१०
† ” ” १२-१०
‡ ” ” १२-११

(अथ) श्रीकृष्णं [32](प्रति) प्रतिवेशिनी-वचनम् ।

स्मित्वोचे वच एकमेवमनया तत् किं हितं लिख्यते
सख्या नो मिलितं दृशा न मिलनं ज्ञातं कथं सम्प्रति ।
वीतृकृन्न्यश्यति चातकोऽरुदपि[33] नो स्वात्यां विशिष्य स्रवेत्
साद्यैवेह किमेष्यतीयमनले[34] लग्नेऽङ्गनं नेक्षते ॥१६॥*

(अथ) राधिकां प्रति मालाकारिणी-वचनम् ।

किं गोप्यते घनसमालि विभूषणं च
जाता निशा-हरिव[35] यौवनदेहकान्त्या ।
कीदृग् भविष्यति हि नायकगन्धयोगाद्[36]
भित्वा स्वभावसुरभेरलयोऽश्नुवन्ति ॥१७॥†

रूपन्तनौ तव विलोक्य विचिन्तयामि
द्रष्टुं हरेर्नयनमत्यभिलष्यतीदम् ।
चन्द्रानने कुचभरैश्चलितासि केन
नम्रा कटी च कचभारतयैव जाता ॥१८॥‡

---

32. प्रतीति योज्यम् ।
33. रौति स्म ।
34. या हि गृहेऽनले लग्नेऽपि अङ्गनं नेक्षते, साद्यात्र कथमेष्यतीति भावः ।
35. निशा + अहः + इव ।
36. नायकगात्रसौरभयोगात् । "घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः ।
सौरभश्चासौरभश्च स द्वेधा परिकीर्त्तितः" ॥ (भाषा-परिच्छेदः।)
नायकसम्बन्धयोगाद्वा । "लेशः सम्बन्धगन्धकः" । इति मेदिनी ।

---

* तुलनीयः, रसिकप्रिया—१२-१२
† „ „ १२-१३
‡ „ „ १२-१३

(अथ) श्रीकृष्णं प्रति मालाकारिणी-वचनम् ।

नो रुन्धि मां गृहमितोऽच्युत देहि गन्तुं
घट्यामुरो हि[37] लगिता चपलेव लोक्या ।
स्यात्तादृशी दृगित एति ततो हि काचित्
सेयं भवेद् गजगति-[38]वृं क(ष?)भानुपुत्री ॥१९॥*

(अपिच) ।

अन्तोऽर्कमेत्त्वमपि[39] भूषित एहि चाप-
द्गास्मीयमेति[40] परिभूष्य च रात्रिरेति ।
भीतोऽग्रही विषमबाणत एव कुञ्जं
सा भाविनी भ्रमरभी[41]-र्गृहमग्रहीच्च ॥२०॥†

अथ राधिकां प्रति ताम्बूलकारिणी-वचनम् ।

हृत् कोमलं तु मधुशेषनिभं मृणाल-
सूत्रोपमस्वरवरो[42] हरते हि चेतः ।
दन्तांश्च दाडिमजबीजनिभान्[43] प्रमोद-
पूर्णाक्षि[44] वीक्ष्य च भवेत्तनुशोणितोष्ठौ ॥२१॥‡

---

37. दण्डद्वयसमयमध्ये सा हृदयलग्ना चपलेवालोक्या भवेत् ।
38. वृषभानुपुत्रीति साधुः पाठः ।
39. अन्तोऽस्तोऽवसानं वा, अर्कं सूर्यम् एत्विति भावः ।
40. आपद्गा विपन्नास्मीति शपथे । प्रिय इति भावः ।
41. भ्रमरभयभीता सा ।
42. मृणालसूत्रोपमस्वरवरः = मृणालसूत्रवत् सूक्ष्मः कण्ठस्वरः ।
43. दाडिमबीजसदृशान् ।
44. आनन्दपूर्णनयनम् ।

---

* तुलनीयः, रसिकप्रिया—१२-१४
† ,, ,, १२-१४
‡ ,, ,, १२-१५

त्वत्शर्म्म मे(ऽ)त्र सखि रोचत एत्यु पृच्छे(?)[45]
त्वां प्रष्टुमेवमितरा नितरां बिभेति ।
जिह्वे र्ययेति[46] नवनीतवदम्बुजात-
मृद्वास्यमिद्धकठिनं[47] गिरमीरितं किम् ॥२२॥*

(अथ) श्रीकृष्णं प्रति ताम्बूलकारिणी-वचनम् ।

दृष्टिं मनाङ् नमयसे न करोष्यनीतिं
जानासि नो व्रजजना हि यथा विदुस्त्वाम् ।
आशु भ्रमं चलचरित्र[48] नयस्यहो हृत्
त्वालोचनं[49] पिवति चौर इवाभिसारम् ॥२३॥†

(अपिच)

एकोरजोरु[50](रः?)परि लिङ्घ्य[51] तथोरसीह
त्वं संम्विशस्ययि कथं वत सापि जीवेत् ।

---

45. एति = उ इति सम्बोधनद्योतकाव्ययपदम् । पृच्छे(?) अहमिति शेषः ।

46-47. नवनीतवत् जिह्वा, अम्बुजवत् मृदु आस्यम्, मुखम् इद्धकठिनं, दीप्त्या कठोरं गिरं किम् ईरयतीत्यर्थः ।

48. हे चलचरित्र = चञ्चलस्वभाव, त्वमाशु शीघ्रं भ्रमं भ्रान्तिमिन्द्रजालं वा नयसीति भावः ।

49. आलोचनं सदसद्विवेकं हृत्वा अपाकृत्य अभिसारं पिवति ; अभिसारवत् साहसे समर्पयतीति, रसिकप्रियायां स्पष्टम् ।

50-51. एकस्योरजस्य स्तनस्य यदुरो वक्षःस्थलं निवासस्थलमिति भावः । तत् परिलिङ्घ्य = विषयाद् विषयान्तरं गत्वा, स्तनाद् वक्षसोऽभ्यन्तरं प्रविश्येति भावः ।

---

* तुलनीयः, रसिकप्रिया—१२-१५

† " " १२-१६

एवं भवेत् क्वचन हृन्नु बालिकानां
विक्रीयते स्मरकरे परिचौर्य्य[52] शश्वत् ॥२४॥*

(अथ) राधिकां प्रति शिल्पिनी-वचनम् ।

लग्नाह्वानतृषाधुनैव कलया त्वारान्न[53] गन्तुं ददे
मज्ज्ञातं परिवर्त्त्यभूत् कृतवशः कुत्र त्वयैवाभवत् ।
यस्मै दुःखमियत्त्वमेसि भसवन्निवारि दृग् दूयते[54]
मुञ्चस्येकदिनं न किं कलयसे नीत्वा करे चित्रवत् ॥२५॥†

(अथ) श्रीकृष्णं प्रति शिल्पिनी-वचनम् ।

स्थैर्यं गृहीत्वा ननु तिष्ठसि त्वं
स्थलास्थलं वेत्सि खलाश्ववन्नो ।
सभ्यो जनस्ताडयते कलङ्क-
कषाभिरस्यैति तथापि न ह्रीः ॥२६॥§

(अपिच)

त्वं कोटिकृत्वो हि विचार्य पश्य
हिताच्च कस्मादपि विदुध्यशेषात् ।
प्रेम्णो हि सङ्गं लग संनिवृत्य
कदापि निर्वाहय नाक्षि(?) सङ्गम् ॥२७॥‡

---

52. बालिकानां व्रजकुमारीणां हृत् परिचौर्य कामदेवस्य करे शश्वद् विपणनं नोचितमित्याशयः ।

53. कलया = लीलया प्रेमकापट्येन वा । कला कपट इति विश्वः । तु + आरात् ।

54. दृशो दुःखमापादयतीति भावः ।

---

* तुलनीयः, रसिकप्रिया—१२-१६
† „ „ १२-१७
§ „ „ १२-१८
‡ „ „ १२-१८

(अथ) राधिकां प्रति जतुकाभरणकारिणी-वचनम् ।

चेतो हृदा मिलसुखं मिलनान्मिलेत् किम्
आहूय पश्य च कथाचन[55] वालये हि
भ्रान्ता भुवि प्रियतया कति वध्यतेऽसौ
याम्यापदं परिबधान वनस्रजाजम्[56] ॥२८॥*

रोषो म्रियेत मुखमोटनमारिते नो
सन्ताडयास्मदुदिते न सरोजनालैः ।
दृष्ट्या विहस्य च विहस्य कतीरयित्री[57]
त्वं कर्हिचिद्वद विहस्य च नन्दवालम् ॥२९॥†

(अथ) श्रीकृष्णं प्रति जतुकाभरणकारिणी-वचनम् ।

यद्दुःखे निजदुःखितं किमु कदाप्यस्मै हितं दीयते
नो रुच्या यदृते पराखिलमदो[58] रुच्यं क्रियेतैव तत् ।
प्रीता यत्त्वयि सोरुभाग्य[59]-मधुना तत् किं विरज्यो[60] नयेः
क्रोधे मानयितुं व्रजेन्नहि पिवेः[61] शीतप्य[62] तप्तं पयः ॥३०॥‡

55. आलये गृहे आहूय कामपि पृच्छेति भावः ।

56. स्रजा + अजम् = कृष्णं, वनमालया परिबधान ।

57. कियत्कालं त्वं विहस्य कटाक्षेणात् ब्रवीसि, वारं तु शब्देन ब्रूहीति भावः ।

58. यं विना किमपि न रोचते ; तस्मै यद्रुच्यं, तत् कुरु ।

59. महद्भाग्यमिति भावः ।

60. सन्तर्प्यः ।

61-62. दुग्धं शीतलीकृत्वैव पेयम् ।

* तुलनीयः, रसिकप्रिया—१२-१९
† „ „ १२-१९
‡ „ „ १२-२०

(अथ) राधिकां प्रति स्वर्णकारिणी-वचनम् ।

लोलामूल्यकटाक्षसूर्म्मि[63] च पटाच्छन्नं भ्रमल्लोचनं
सद्धारातिखरं[64] विशालरसवद्यद्रोचते मद्धृदे ।
स्निग्धं वीक्ष्य चतुर्गुणं तदुचितं दासो(ऽ) भवद्यद्धरिः
शुक्[65]-संकोच्यजरोचनं[66] तव धृतेः संमोचनं लोचनम् ॥३१॥*

(अथ) श्रीकृष्णं प्रति स्वर्णकारिणी-वचनम् ।

ईषद्धरे परिहसेन हि कुप्यतीयं
हृत्वा मना हसति वीक्ष्य मनोऽनुरज्य ।
प्रेम्णामजाग्रदिह गूढ़प्रहेलिकाया[67]
[68]विद्वेदनाभिरिह मत्सममानिशीथात् ॥३२॥†

(अपिच)

अद्यावधिश्रितधृति[69] र्यदहर्द्वयं त्वं
तादृग् भवाद्रिधर[70] कोऽस्त्युरु-भाग्यभाक्[71]त्वत्
त्वत्प्रेयसी-श्रुतिमनङ्गकथासु दातुं
सा म्भो(ह्यो?)दिनावधि[72] हि किञ्चिदिह प्रवृत्ता ॥३३॥‡

---

63. लोलाः चञ्चलाः अमूल्याः महार्घाः ये कटाक्षाः त एव सूर्म्मयः शोभनतरङ्गा यस्य लोचनस्य तत् ।

64. अतिशयधारवत्तया खरं तीक्ष्णम् ।

65. शुचं खेदं क्लेशं वा, संकुचति अल्पीकरोतीति, शुक्संकोचि ।

66. अजस्य कामस्य रोचनं वर्धनमिति भावः ।

67. प्रेम्णां गूढप्रहेलिकाया निगूढरहस्यस्य ।

68. विद् ज्ञानं, वेदना ज्ञापनं, ताभिः ; मत्सममानिशीथादजाग्रदिति भावः ।

69. अवधिं यावत् श्रिता धृति धैर्यं येन स तथाभूतः सन ।

70. हे अद्रिधर = गिरिधर !

71. त्वत् त्वत्तो ऽपरः कः उरुभाग्यभागस्तीत्यन्वयः ।

72. ह्योदिनं गतदिवसम् अवधिः यस्यां क्रियायां, तत् यथा तथेति भावः ।

* तुलनीयः, रसिकप्रिया—१२-२१

† „ „ १२-२२

‡ „ „ १२-२२

(अथ) राधिकां प्रति रामजानी-वचनम् ।

स्वच्छं मृदु त्विदमिदं मलिनञ्च तीक्ष्णं
लोलालिनीलनलिनात्तमपत्रतुल्यः ।
तत् साधु शुद्धसरलं त्विदमत्यराल-
कर्मापि चौरकुशलः परमः किरातः ॥३४॥*

(अपिच)

प्राप्यावरुद्धामदं[73]-माप्स्यसि नो कथञ्चित्
त्व(त?)त्स्वल्पलोल[74]-मिदमुच्चतरं हि लोलम् ।
किं नो निषेधसि कदाऽवचमीक्षणन्ते[75]
स्पृष्ट्वा मुहु र्व्रजति हन्मम मोहनस्य ॥३५॥†

(अथ) श्रीकृष्णं प्रति रामजानी-वचनम् ।

तोषः प्रेमकृतेऽभवद् व्रजपतेः कः कामिनीकोटिषु
सौख्यस्यापि लवो भवेन्नहि विना राधार्द्धनेत्रेक्षणम् ।
किं कर्पूरधिया[76]-स्यमाशितखरी(ड़ी?)[77] कुर्याद्धिमं सौरभि
हस्ते[78] तिष्ठति लालसा न तु हिमे पीते तृषा शाम्यति ॥३६॥‡

73. अवरुद्धं श्रीकृष्णे आसक्तमिदं ते नेत्रम् ।

74. श्रीकृष्ण-स्तावत् त्वन्नेत्राभ्यामप्यतिलोलः इत्याशयः । तत् स्वल्पलोलमित्यपि वा पाठः ।

75. कदाहं त्वामवोचम्, तथापि किं न ते ईक्षणे निषेधसि ; ये वारं वारं मोहनं स्पृष्ट्वा-पसर्पतः इति भावः ।

76-77. आशिता भुक्ता भोजिता वा खड़ी खटी येन तत्, आस्यं मुखं, हिमं सौरभि वा कुर्यादित्यन्वयः ।

78. यदा लालसा लिप्सा हस्ते तिष्ठति, तदा हिमे पीतेऽपि तृष्णा न शाम्यतीति भावः ।

* तुलनीयः, रसिकप्रिया—१२-२३
† ,, ,, १२-२३
‡ ,, ,, १२-२४

(अथ) राधिकां प्रति सन्न्यासिनी-वचनम् ।

[ शीतेऽपि ते हृदि न सा वसति त्वमु(?) ][79]
त्यक्तं यदा त्यजति नो किमु तर्हि कार्यं
तृष्णा क्षुधा द्वयमुपैष्यति चाप्यकाण्डे ।
स्यान्नो हिमं हृदपि खेलति धिस्मृति र्नौ[80]
रुच्यं किमप्यलमहर्निश-जागरित्री[81] ॥२७॥*

(अपिच)

तप्येत तापत इह द्विगुणं सहस्रं
शीतेन यास्यत उरस्ययमेकवह्निः ।
गात्रं न [82]मोट कलयाञ्चलमञ्चलञ्च
याचे निपात्य[83] विलगिष्यति कस्यचिद् दृक् ॥२८॥†

(अथ) श्रीकृष्णं प्रति सन्न्यासिनी-वचनम् ।

[84]शीतेऽपि हृदि न सा वसति त्वमस्या-
स्तापालयं त्यजसि न क्षणमप्युरोऽपि ।

79. २९संख्यकश्लोकस्य प्रथमपादः ; लिपिकरप्रमादः ।
80. चिति विस्मृतिरागमिष्यतीति भावः ।
81. अहोरात्रं जागरणपरा भविष्यसीति भावः ।
82. √मुट् भ्वा, लोट् हि ।
83. अञ्चलं निपात्य प्रसार्य याचे ।
84. उपजातिः छन्दः ।

* तुलनीयः, रसिकप्रिया—१२-२५
† „ „ १२-२५

हीरोपमं[85] निजमनोऽन्यकरे प्रदाय
व्यर्थं हरे नयसि हृन्मधुशेषिताभम्[86] ॥३९॥*

(अपिच)।

खेदोऽपि तेऽत्र च तथालगदत्र[87] खेदो
यत्क्षुद्गता सुखगृहाणि[88] च विस्मृतानि।
छद्म त्यज क्षणमलं कुरु वक्त्रमस्यां
निर्वाहयातिविमतौ प्रियतां त्वमेव ॥४०॥†

(अथ) राधिकां प्रति पट्टसूत्रकारिणी-वचनम्।

मद्गोस्वामिनि यत् कृतेऽत्रमिलितो वाचा मयाजश्छलाद्[89]
वाचा संमिलिते दृशास्ति मिलितो गुप्त्वालिनेत्राणि च।
हृल्लग्नं मिलिते दृशास्ति नय हृत् संमिल्य वर्त्मैम्यहं[90]
किं कार्यं मिलिते हृदास्य मिलनान्म्लानं कृतं मानसम् ॥४१॥‡

---

85. हीरकसदृशम्।

86. शिक्थं, मक्षिकामलं वा, मधुशेषि ; इति राजनिघन्टुः। 'मोम' इति भाषा। तस्य भाव-स्तत्-सदृशम्।

87. अलगत् + अत्र।

88. [illegible] सुखादीनि विस्मृतानि।

89. अजः = श्रीकृष्णः, नायकः।

90. वर्त्म एमि अहमिति अन्वयः।

---

* तुलनीयः, रसिकप्रिया—१२-२६
† „ „ १२-२६
‡ „ „ १२-२७

(अथ) श्रीकृष्णं प्रति गुरुश्रकारिणी-वचनम्।

[91]वक्त्रं योजयसो[92]-ता(रा?)स्विव मृगाक्षा(क्ष्या?)मत्र [93]मैवं भव
स्वर्णाभं यदि पित्तलं शृणु कथञ्चिन्न स्पृशेत् पाणिना।
कूजेन्नो पिकवत् कलन्तु बलिभुग् वाण्या गुणं शिक्षितः
श्यामेहस्व कियद्रसालगतृषा नो चिञ्चया पूर्यते ॥४२॥*

वागध्वनाह सुखपञ्चबाण-
करेण मर्म्मेरितवान् सखीनाम्।
तासामिदानीमतिकोविदानां
कियन्ति कर्म्माणि पराणि वच्मि ॥४३॥†

इति श्रीमन्महाराज-रामजीवनराय-महाशयादिष्ट-श्रीमधुसूदन-कवीन्द्रविरचितायां रसचन्द्रिकायां सखीजनवर्णनं नाम द्वादश आलोकः ॥

91. वर्णच्युतिः।

92. इतरास्वपि वक्त्रं मुखं योजयसीत्यन्वयः।

93. मृगाक्ष्यां = मृगनयनायां नायिकायामिति भावः।

* तुलनीयः, रसिकप्रिया—१२-२८, २९।

† „ „ १२-३०

# रसचन्द्रिका

## [ त्रयोदश आलोकः ]

**अथ सखीजनकर्म-कथनम् ।**

शिक्षा-विनयमानना(?) अपि मिलननेपथ्यकरणानि ।
क्रोधोद्दिपनमनुयोगो रतिरपि तासामयं व्यवहारः ॥१॥*

**(अथ) राधिकां प्रति शिक्षा ।**

भो नाथे न हि दह्यते मुखगते दीना सपत्नीतनू
दत्ते न ह्यधुनाखिलं[1] सुखमु किं नाथोऽस्ति दातुं सुखम्
भद्रत्वं नहितो न[2] नेरयति भो नाथात्तु सर्वं सुखं
नाथात् प्रेम तु निर्व्वहेत् क च नञा[3] तद् भो नयाम्यापदम् ॥२॥†

**(अथ) श्रीकृष्णं प्रति शिक्षा ।**

उद्वर्त्तनस्नपनिता ननु कुङ्कुमोद्वा
त्वेषा सुगन्धितशिराः किमनायि वा(रा?)से[4] ।
गन्धं निधाय परिधाप्य च फुल्लपुष्पं
भ्रान्त्या विमार्ज्य कलयेस्तु वृथाञ्जनेन ॥३॥‡

---

1. 'नही'ति निषेधवचनमखिलं सुखं दत्ते । उ, प्रश्ने, इति हेमचन्द्रः ।

2. 'नहितः' नाहीतिशब्दात् भद्रत्वं कल्याणत्वं न न चेरयति, नद्वयेनात्यन्ताभावं दृढीकरोति ।

3. नञा सह कदापि प्रेम न निर्वहेदिति भावः ।

4. रास इति साधुः पाठः ।

---

* तुलनीयः, रसिकप्रिया—१३-१

† ,, ,, १३-२

‡ ,, ,, १३-३

पर्णन्तु खादयसि किं घनसारपूरं
मग्नं मनो यदि भवेत्तु विलास[5] एव ।
सा [6]मान्यतां पदगतेन विहाय हा हा
सर्वः सुगन्ध [7]इदमास्यगतोऽस्ति कृष्ण ॥४॥*

(अथ) राधिकां प्रति विनयः ।

तिष्ठाम्येवमवाक् किमालि शतशः सेहे रुषोक्तिरहं
निर्वाहोऽमिलनात् कथं तव मिलत्वं[8] यावदेतद्दिनम् ।
कोटीचेष्टितमातनुष्व मिलितुं तावत् क[9] मैलं सुखं,
पश्याङ्गं मुकुरे प्रियेण हि कियत् कालं हृदा मेलयेः ॥५॥†

(अथ) श्रीकृष्णं प्रति विनयः ।

नीलाम्बुजाक्षि[10] दशना ननु दाडिमेन
बिम्बैरकार्यधर एव हसोऽमृतेन ।
वेणी हरे पिकगिरोऽपि[11] यथा त्रिवेणी
कृत्वा कटीं कचकृशां[12] विजितो विधिस्तत् ॥६॥‡

---

5. विलासे = आनन्दे ।
6. पदगतेन त्वया हा हेति कृत्वा सामान्यतां विहाय सा मान्यतामित्यन्वयः ।
7. इदमास्यगतः, अस्या नायिकाया आस्यमिदमास्यं गत इत्यर्थः ।
8. यावत् कालमेवावसर-स्तावत्त्वं मिलेः इत्याबाशयः ।
9. मेलो मिलनं तस्मात् भवं मैलं; मिलनसम्बन्धीति भावः ।
10. नीलाम्बुजेन अक्षि ; अथवा, नीलाम्बुजमेव अक्षि अकारीत्यर्थः ।
11. पिकस्य गीरिव गीर्यस्यास्तस्या इति भावः ।
12. कचकृशां कटीम् = आगुल्फविलम्बितकेशकलापावृततयातिकृशां कष्टेन दर्शनीयां कटीं निर्माय तत्सौन्दर्येन विधाता स्वयमेव विजित इति तात्पर्यम् ।

---

* तुलनीयः, रसिकप्रिया—१३-३
† ,, ,, १३-४
‡ ,, ,, १३-५

(अपिच)।

यत् कल्पवृक्षफलतुल्यकुचौ चकार
तेनैव मूढ़मतिको विदितो विधाता।
नो वीक्ष्यसेऽच्युत ममालिसमस्तदेहं
हेम्ना विधाय विदधे मधुशोषिते[13] हृत् ॥७॥*

(अथ) राधिकां प्रति मानना।

गवाक्षतो वीक्ष्य मुखं सुभावं
संदर्श्य सन्तोष्य मुदान्विताऽस्थाः।
वक्तुं [illegible]मवागभूवं
न रोचते साम्प्रतमीदृशं मे ॥८॥†

(अपिच)।

प्रतारितास्त्वादृश एव वन्धो(ह्लो?)
मया [14]त्वयाहञ्च वृथा प्रतार्य।
सदा चलेरीदृशचातुरीतः
स्मित्वाऽच्युतेऽङ्गीकृत[15]मस्ति नो मे ॥९॥‡

---

13. हेम्ना सख्याः शरीरं निर्माय मधुशोषितैः मधुजैः( मोम इति भाषा )हृदयं निर्मातुं [illegible] विधातुः मूढ़मतित्वं विदितमिति तात्पर्यम्।

14. त्वयाहं प्रतार्यो, मयापि त्वं (नायिका) च प्रतार्येति भावः।

15. अच्युते पुनः स्मित्वाभिलषितमङ्गीकृतं, मयि (सख्यां) पुन र्नेति वदसीत्यर्थः।

---

* तुलनीयः, रसिकप्रिया—१३-५

† „ „ १३-७

‡ „ „ १३-७

(अथ) श्रीकृष्णं प्रति मानना।

धृत्वा भूषणभेदनं परिधद्वस्त्रादिपुष्पं दधद्
भाग्यं प्रेम च सौभगञ्च कलयन् जातानुरागो हृदि।
सद्गा(न्ध?)दधदङ्घ्रिगो[16] निशि जजागर्था(?)[17]-शयन् पर्णकं
कृष्णोत्थाय[18] चलोपविश्य किमिहा[19] चौर्यासि हृन्मानकृत् ॥१०॥*

(अथ) राधिकां प्रति मिलनम्।

संख्यास्यहं यद्गुणान् गणयेगु(गु?)णौघान्
तच्चेद् गुणांस्तु गणये गुणसंहतिं त्वम्।
[20]गोप(?)यसीद्वशमयि प्रियतां छलने
गुप्तो भवेदिव घने विधुराशु[21]-धावन् ॥११॥†

(अपिच)।

गेहे वसेत् सभयभाद्रनिशीथ एषा
केन प्रियो हि विपिने वसतीह यस्याः।
उत्थाप्यसे त्वमुसितोत्थितिमेत्य नैषि
ब्रूषे न किं तदिह राज्ञि मनोऽन्तरे यत् ॥१२॥‡

---

16. सद्गन्धेति साधुः पाठः, सद्गन्धमादधातीति सद्गन्धादधन् च स अङ्घ्रिश्चेति, तं गच्छतीति भावः।

17. जजागर्थेति सन्दिग्धः पाठः।

18. हे कृष्ण, उत्थाय चल।

19. त्वं हृदाचौर्य्य मानकृद्सीति भावः।

20. गोपायसीति साधुः पाठः।

21. विधुश्चन्द्रो धावन्नाकाशपथा परिक्रमन् आशु घने मेघे गुप्तो भवेदिवेत्याशयः।

---

* तुलनीयः, रसिकप्रिया—१३-८

† ,, ,, १३-११

‡ ,, ,, १३-११

(अथ) श्रीकृष्णं प्रति मिलनम् ।

आली जिता हि पथि(शि?)शिक्ष्य[22] विमिष्य मेघ-
माला[23] प्रदर्श्य च दिशास्तडिदर्धरात्रे ।
शश्वज्जिता रतिरवेक्ष्य जितोऽपि कामः
संमारयन्नपि[24] महर्त्तिविधो निषेव्यः ॥१३॥*

एवं विधे मतिमदो[25] वत निर्दयास्मै[26]
रात्रिन्दिवं दहति यत्तनुदाह एवम् ।
नो मन्यते कथमपीह जिताः पिकी वा-
ह्ञ्चातकी कथनमाननवाचनासु ॥१४॥†

[27]श्रीराधिका-वेशवर्णनम् ।

संस्कृत्याहितलाक्षयाङ्घ्रियुगलं दृक् चाञ्जिता स्वञ्जनै-
र्म्मञ्जु स्त्रक् परिधापितापि च मया सम्भूषिता भूषणैः ।
पश्य त्वं मुकुरेऽधुना सखि रूचिं सर्वाङ्गमाकल्पितं
नीत्वाङ्ग(ङ्क?) कुटिलेक्षणेऽथ हरिवत् कः पर्णमाभोजयेत् ॥१५॥‡

---

22. शतं शिक्षितापि आली पराजितेत्याशयः ।
23. मेघमाला = कादम्बिनी ।
24. कामः वारं वारं प्रहरन्नपि ।
25. मतिमदः = बुद्धिगर्वः ?
26. अस्मै जनाय निर्दया निष्ठुरेति भावः ।
27. कादाचित्कः प्रयोगः ।

---

* तुलनीयः, रसिकप्रिया—१३-१२
† ,, ,, १३-१२
‡ ,, ,, १३-१३

(अथ) श्रीकृष्णवेश-वर्णनम् ।

उष्णीषं तनुमध्यवेष्टिवसने कूलस्तानि राजन्त्युरु[28]
सद्गन्धो रचितस्तथोरसि मनोहारोऽपि हारोऽर्पितः ।
वोटीमत्ति मुखेऽर्पिता मयि लगेद्दूशोऽखिलो दुश्छवि[29]-
र्बालासौ तनुतेऽलिकेन[30] तिलकं यावद्वरे सौष्ठवैः ॥१६॥*

(अथ) राधिकां प्रत्याक्षेपोक्तिः ।

भ्रान्तं न्यवर्त्तयमजस्य मनो मुहुश्च
भूयो हि भाग्यघटिकेव[31] पुनश्च(श्वः?) [32]भायात् ।
यत् पद्गता प्रतिपलं त्वमयं प्रियस्त्वत्[33]-
पत्पातितः प्रियपदे हि मया निपत्य ॥१७॥†

(अपिच) ।

लुप्तं महत्त्त(त्त्व?)[34]-मुरु तन्महतः सुताया-
श्चक्रे त्वया महदहो महतीषु मध्ये ।
मान्यो गुणो मम हि माननयेति जाने
तन्मानिता धृतवती मयि मौनितां त्वम् ॥१८॥‡

---

28. राजन्ति = शोभन्ते ।
29. अखिलो मयि दुश्छविः कुश्रीको लगेद्, यावदसौ बाला तिलकं न तनुत इत्यन्वयः ।
30. अलिकेन = ललाटेन ।
31. भाग्यस्य घटिकेव = भाग्योदयस्य शुभक्षणमिव ।
32. भायात् ?
33. त्वत्पादपातितः ।
34. महतः सुताया स्तन्महत्त्वं लुप्तमित्यन्वयः ।

---

* तुलनीयः, रसिकप्रिया—१३-१४
† ,, ,, १३-१५
‡ ,, ,, १३-१५

(अथ) श्रीकृष्णं प्रति दूत्याक्षेपोक्तिः ।

वाच्या वासयिता[35] किमस्यहितरौ तिन्दौ[36] च कामीलता
लोपं नैति विधो(धे?)र्लिपि वैरमणिं नीत्वा हि शीर्षे ददौ ।
स्वास्यं पश्य च दर्पणे परिमितिं नीतैव वाचं वद
तत्राधोपरिवार्यतेऽन्यसुभगा[37] जिह्वागता यत्कृते ॥१६॥*

(अथ) राधिकां प्रत्यनुयोगः ।

कस्यां[38] महाद्भुतसुरूपकुलस्थिति र्नो
तापोऽन्तरे तव हि मृग्यत एक एवम् ।
नो मन्यसे निजसमं मनुजं च शश्वद्
गर्वं विमान[39]-मधिरुह्य नभो भ्रमेस्त्वम् ॥२०॥†

(अपिच) ।

गर्वादुदस्य भृशमञ्चलमङ्गमोटै-
र्मुञ्चैवमीक्षणममूल्यमितस्ततो हि ।
हस्ते हि यस्य ननु हीरकवन्मनोऽदा[40]-
एणाक्षितं वद हरिं परितुष्य मन्दम् ॥२१॥‡

---

35. वासयिता = भावयिता ।
36. तिन्दौ = केन्दूकवृक्षे । तेंदू, गाव इति भाषा ।
37. अन्यसुभगा = अन्या सौभाग्यशालिनी स्त्री ।
38. रूपं च कुलं च रूपकुले शोभने रूपकुले सुरूपकुले, महाद्भुते सुरूपकुले तयोः स्थितिः, कस्यां नो भवेदित्यन्वयः ।
39. गर्वमेव विमानम् ।
40. हीरकवदमूल्यं मनः यस्य हस्ते त्वमदाः ।

---

* तुलनीयः, रसिकप्रिया—१३-१७
† ,, ,, १३-१८
§ ,, ,, १३-१८

(अथ) श्रीकृष्णं प्रत्यनुयोगः ।

मध्यस्थतो न च भयं शपथाश्च शोच-
स्ताम्बूलरागमवलुम्प हरे दृगन्ते ।
चौर्यं स्मरामि नवनीतगतं मिलं सा
बालापि वेद तव या शिशुताद्वितीया ॥२२॥*

वक्ष्यामि किं परमियं कुमति ममास्मिन्
धृत्वा पदं लगति नन्दकुमार लज्जा ।
धाष्ट्यं लवेयमधुनापि च रोषितेयं
धूलिश्च्युतेयमयि नो पदपादि(ति?)तस्य[41] ॥२३॥†

(अथ) दूतीं प्रति राधिकोक्तिः ।

धात्री वात्येव दात्री जलमिव च तनौ दुःखदग्धास्ति दासी
ताम्बूलीमाल्यकार्यौ तप इव दयिते नापिती स्नेहनद्धा[42] ।
दिव्यं ते दिव्यमाले मम शृणु च तवैवाशया[43]-स्म्येकिकायाः
कृष्णेणा(ना?)मेलय(या?)प्राप्नुहि किमु[44] न च मामात्महृद्यं त
उक्तम् ॥२४॥‡

---

41. पदपातितस्य = चरणपतितस्य तव शरीरे लग्ना धूलिर्नापगता ।

42. नापिती दूती पुन र्ममैव दयिते स्नेहनद्धा बद्धप्रीतिः ।

43. एकिकायास्तव एवाशयास्मि जीवामीत्यर्थः ।

44. किम्विति सम्भावनायां विमर्षे वा, कृष्णेन सह अमेलय मां न मेलय चेत्तदा मां पुनः प्राप्नुहि प्राप्स्यसि किमु ? नाहं पुनर्जीवामीति भावः ।

---

* तुलनीयः, रसिकप्रिया—१३-१९

† „ „ १३-१९

‡ „ „ १३-२०

एवं श्यामं हि श्रृङ्गाररसं वर्णय सज्जन ।
चातुर्वर्णाश्रमाणाञ्च[45] सुखदं श्रवणोक्तितः ॥२५॥*

इति श्रीमन्महाराज-रामजीवनराय-महाशयादिष्ट-श्रीमधुसूदन-कवीन्द्र-विरचितायां रसचन्द्रिकायां सखीजनकर्मवर्णनं नाम त्रयोदशः आलोकः ।

---

45. चतुर्णां वर्णानामाश्रमाणां च ।

---

* तुलनीयः, रसिकप्रिया—१३-२१

( चतुर्दश आलोकः )

अथ हास्य-लक्षणम् ।

नेत्रोक्त्या च कियत् कृत्या मुदुदेति यदा हृदि ।
तदा हास्यरसः स्याद्धि बोद्धव्यं चतुरैरिह ॥१॥*

अथ हास्यभेद-कथनम् ।

मन्दहासं कलं हासमतिहासञ्च कोविदाः ।
चतुर्थं परिहासञ्च सर्वे सद्वर्णयन्तु च ॥२॥†

अथ मन्दहास-लक्षणम् ।

किञ्चिद् विकषिता नेत्रकपोलदशनाधराः ।
यत्तद्धि मन्दहास्यं स्यात् कोविदैरिति कथ्यते ॥३॥§

वर्णने वर्धते ग्रन्थ-स्तदेव कविभिः कृतम् ।
बोध्या अप्यरसा एव प्रच्छन्नाश्च प्रकाशकाः ॥४॥‡

---

* तुलनीयः, रसिकप्रिया—१४-१
† ,, ,, १४-२
† ,, ,, १४-३
‡ ,, ,, १४-४

(अथ) राधिका-मन्दहास्य-वर्णनम् ।

पर्णं खादयितुं न वेत्त्यधरयोः[1] केनापि लग्नाङ्गुलि-
स्तर्ह्यालोकि(यथा?)[2] त्वयाच्युत दृशौ नीते गिलित्वेव यत् ।
वागुक्ता मृदुहास्यमेवमविदं[3] मग्नो रसेऽसावुरौ[4]
जानेहं सकलं मनोऽभिलषितं सम्पूरितं प्रेयसः ॥५॥*

(अथ) श्रीकृष्ण-मन्दहास्य-वर्णनम् ।

दन्तद्य तिश्च कलयन् रदनच्छदान्त-
र्वर्षन् स्मरेषुमपचेतनमातनोति ।
लोलं कपोल-गतबिम्बविराजि नेत्रम्
क्रीणाति कर्मवचनेन समं मनोऽपि ॥६॥†

(अपिच)

भावं भ्रुवौ कथयतो ननु मत्प्रियायाः[5]
प्रेयोऽतिसुन्दर[6] कथं कथय स्वमौनम् ।
किम्वा प्रकाशहसिते न नु नेष्यसि त्वं
कृत्वा मनांसि नयसे हसिते यदेवम् ॥७॥‡

---

1. उष्ठाधरयोः ।
2. पादेऽस्मिन् वर्णद्वयच्युति र्दृश्यते, यथेति योज्यम् ।
3. अहमविदमित्यर्थः ।
4. असौ उरौ महति रसे मग्नेत्यन्वयः ।
5. मम नायिकायाः ।
6. प्रेयान् चासावतिसुन्दरश्चेति, तत् सम्बोधने ।

---

* तुलनीयः, रसिकप्रिया—१४-६
† ,, ,, १४-७
‡ ,, ,, १४-७

अथ कलहास्य-लक्षणम् ।

कलः किञ्चित् श्रुतो यत्र विलासः कोमलामलः ।
तत्र हन्माहयेद्वीरैः कलहास्यं च वर्ण्यते ॥८॥*

(अथ) राधिका-कलहास्य-वर्णनम् ।

आकल्पः[7] कल्पितोऽसौ शितिरिह[8] विदिता नर्त्तकी पुत्तली या
नृत्यत्कोटिकटाक्षा नटयति गतिभेदं[9] पृथक् स्नेहनेता ।
दीप्तिर्द्दीपप्रकाशो मृदुहसमुरजो[10] वाद्यते कृष्ण पश्य
पश्यान्त्या(?)[11]स्त्वाममुष्या भवति च नटनस्थानमक्ष्णोऽन्तराले ॥९॥ †

(अथ) श्रीकृष्ण-कलहास-वर्णनम् ।

अद्य त्वां किञ्चिदूचे सखि सरसवचो भूरिकालं मुरारि[12]-
व(र्व?)स्त्रं दत्वा गलेऽसौ समरयचयदुरो हारवच्चित्तहारि
आश्चर्यं मे महत्तत् कथमहहकरो भूरि[13] जग्राह बाहुं
दत्ते हस्ते त्वयादः शिरसि किमु [illegible]नञ्चले ग्रन्थिमाधात्[14] ॥१०॥‡

---

7. आकल्पः = वेश इत्यमरः, मण्डनमिति हेमचन्द्रः ।

8. शितिः = शुक्लः कृष्णश्च, "शितिस्त्रिषु सिते कृष्णे भूर्ज्जे सारेऽपिच द्वयोरिति" शब्दरत्नावली । या शितिः पुत्तली, या च कृष्णाक्षिपुत्तली सा नर्त्तकी इव कल्पिता ।

9. गतिभेदं = नृत्यभङ्गिभेदं ।

10. मृदुहास्यमेवात्र नृत्ये मुरजध्वनिः ।

11. 'पश्यन्त्या' इति साधुः पाठः । त्वां पश्यन्त्या अमुष्या अक्ष्णोरन्तराले नटनस्थानं भवतीत्यन्वयः ।

12. मुरारिर्वस्त्रमिति साधुः पाठः ।

13. करो भूरि बाहुं जग्राह = नायकस्य करस्ते बाहुं भूरि पर्याप्तं जग्राह ।

14. यथा पुनः कथमप्यपराधो न स्यात् तत्स्मरणार्थं त्तरीयाञ्चल ग्रन्थिमादधाति ।

---

* तुलनीयः, रसिकप्रिया—१४-८

† „ „ १४-९

‡ „ „ १४-११

अथातिहास-लक्षणम् ।

अर्द्धार्द्धवर्णपदकं निःशङ्कं हसितञ्च यत् ।
प्रकाशितरदास्यञ्च सोऽतिहासः प्रकीर्त्तितः ॥११॥*

(अथ) राधिकातिहास-वर्णनम् ।

जागर्त्ति शीर्षकुसुम-द्युति-रुत्तमाङ्गे
भाले तथा तरुणिते तिलकं विभाति ।
दन्तद्युतिर्द्युतिमुपैति तथैव कण्ठे
कण्ठस्रजामरुणता लसतीह तादृक् ॥१२॥†

(अपिच)

दीप्तिः सुचारु-चिवुकस्य कपोलयोश्च
मुक्ताचलत्वमिह भाति तथा नसोऽपि ।
लोलाक्षि च क्षणमहो हस मन्दमन्दं
यत् कृष्णमानसमिदं स्थगितं भवेच्च ॥१३॥‡

(अथ) श्रीकृष्णातिहास-वर्णनम् ।

पतन्नेवोत्तिष्ठन् मुहुरपि सुतुष्यन् गललगन्[15]
पृथङ्मध्ये मध्ये छविरपि पृथगेवं भवति हि[16] ।

---

15. गले लगतीति गललगन्, कण्ठाश्लेषी भवन् ।

16. मध्ये मध्ये अनन्यसाधारणीं छविं बध्नातीति भावः ।

---

* तुलनीयः, रसिकप्रिया—१४-१२

† „ „ १४-१३

‡ „ „ १४-१३

तथार्द्धार्द्धं वर्णं वदति निजमध्ये पिकलतां
शुभैकस्या मैत्र्या[17] रुचिरमपि वाक्यं सुरुचिरम् ॥१४॥*

(अपिच)।

सुरुच्यं श्रोतुं तत् सकलमिह बोध्यं नहि भवेन्
मया गुप्त्वा दृष्टं[18] श्रितसमरहितं कृष्ण शपथः[19]।
स कालिन्दीतीरे तरुवरतले तूर्द्धं उदितः[20]
प्रियां काञ्चित्तालं ददिह कुमारो हसति च ॥१५॥†

अथ परीहास[21]-लक्षणम्।

दम्पतीस्थितिमुल्लङ्घ्य सर्वे परिजना धिया।
उत्तिष्ठन्ति हसित्वा यत् परीहासः स उच्यते ॥१६॥‡

---

17. शुभं कल्याणमेव एकमद्वितीयफलं यस्या स्तथाभूताया स्तस्या मैत्र्या मित्रताया रुचिरं वाक्यं सुरुचिरं भवतीत्यर्थः।

18. गु[illegible]।

19. अन्तरितेन मया यद्दृष्टं, तत् श्रितसमेन सेविततुलनया रहितमिति कृष्णस्य नाम्ना शप इति भावः।

20. ऊर्ध्वं उदितः = प्रकामं प्राप्तोदयः।

21. परिपूर्वकस्य हस इकारस्य दीर्घः।

---

* तुलनीयः, रसिकप्रिया—१४-१४

† „ „ १४-१४

‡ „ „ १४-१५

(अथ) राधिकां प्रति परीहासः।

गायत्येकैत्य नारी विपुलविपिनतो गीः[22]पदं मन्य आधा-
द्राधेत्युक्तिस्तयोचे त्विव कुसुमधनुः कामिनी चारुतास्याः।
गोपी-प्रायं[23] हरिं[24] सादरममिलदसौ प्रोत्थिता व्याकुलात्मा
सम्पूर्याङ्कं समालिङ्गित इह जहसुः सर्वगोप्यः समुच्चैः ॥१७॥*

(अथ) श्रीकृष्णं प्रति परीहासः।

यूनी श्रुत्वाजलुण्ठं[25] शिरसि निरगमच्छून्य पात्रं[26] निधाय
निन्ये नित्यं यथाच्छाद्य[27] हि बहिरुपधे बिन्दवः कुत्र कुत्र।
तेनागादु यत् पथेऽसौ हरिरनयदथोत्तार्य(?) तामान(य?)य्य[28]
[29]ह्रीणः पाणौ स कृत्वा चषकमथ हसेत् सा हि
दत्ताञ्चलास्या ॥१८॥†

अथ करुणारस-लक्षणम्।

प्रियस्याप्रियकृत्येव जायते करुणारसः।
व्याख्यात ईदृशो वर्ण(:?)[30] कपोतस्तरुणो यथा ॥१९॥‡

---

22. गीः सरस्वती पदं सङ्गीतपदम् आधात् रचितवतीति मन्य इति भावः।
23. गोपीवेशधारिणं हरिमिति भावः।
24. सादरं साकुलमित्यर्थः।
25. अजस्य लुण्ठं = श्रीकृष्णस्य दध्यादिहरणवृत्तान्तं श्रुत्वेत्यर्थः।
26. च्छून्यपात्रमिति साधुः पाठः। छून्येति ग्रन्थे पाठः।
27. यथाच्छाद्येति साधुः पाठः। छाद्येति ग्रन्थे पाठः।
28. आनय्य्येति साधुः पाठः।
29. ह्रीणः = लज्जितः।
30. वर्णः इति साधुः पाठः।

---

* तुलनीयः, रसिकप्रिया—१४-१६
† ,, ,, १४-१७
‡ ,, ,, १४-१८

(अथ) राधिका-करुणारस-वर्णनम् ।

सूरादपारसुमहाः[31] सुकुमार इन्दोः
शम्भोरुदारहृदयं धृतवान् महोरु[32] ।
पूर्णप्रभु-र्मधवतः समरोरुसूरो[33]
वा(रा?)मान्मनो हरति काम-सुरूपसिद्धः[34] ॥२०॥*

(अपिच) ।

धीरोऽम्बुधे र्गणपते[35] रतिचातुरीकः
केनैवमागमयते वत वासराणि ।
नन्दोऽतिमन्दमतिकः कथये यशोदां
किं प्राप्य पुत्रकमरोत् पशुपालमेवम् ॥२१॥†

(अथ) श्रीकृष्ण-करुणारस-वर्णनम् ।

सच्चम्पकस्य कलिकेव सुगन्धपूर्णा
सा रूप[36]-वल्लरिरिवास्ति मनोऽलिरुच्या[37] ।
वागीश्वरी सुचतुरा श्रुतिवागिवेह
ख्याता जगत्सु सुखदेव महेन्द्रराज्ञी ॥२२॥‡

---

31. अपारसुमहाः = अतिमहत्तेजाः ।
32. महोरु = महोच्चं ।
33. समरोरुसूरः = समरवरिष्ठः ।
34. कामवद्रूपप्रसिद्धः ।
35. गणपतिरिवातिचतुर इति भावः ।
36. वल्लरिः = इकारान्तः, मञ्जरीत्यमरः ।
37. मनसो या अल्यस्ताभ्यो रुच्या, अन्तरङ्गसखीजनप्रिया ।

---

* तुलनीयः, रसिकप्रिया—१४-१९
† ,, ,, १४-१९
‡ ,, ,, १४-२०

(अपिच)।

कामी कलेव रतिवन्ननु[38] पूर्णपुण्य-
प्राप्याचलेव कमलेव वपुष्मतीयम्।
को गोपजातिमकृतातिकुरीतिमेवं[39]
विक्रापयत्यपि कुमारिकया पयो यत् ॥२३॥*

अथ रौद्ररस-लक्षणम्।

विग्रह[40](हः?) क्रोधवान् यः स्यात्तथैवोग्रशरीरभृत्।
भवेद्रौद्ररसस्तत्रारुणवर्णः स कीर्त्तितः ॥२४॥†

(अथ) राधिका-रौद्ररस-वर्णनम्।

निन्ये कपोतकरिकेलिकुरङ्गसिंह-
मीनाहिकञ्जपिकखञ्जनकीरसारम्[41]।
दुःखं ददे मृदुमृणालमरालबिम्ब-
मालूरचम्पककुङ्कुमदाडिमेभ्यः ॥२५॥‡

---

38. कामी कला = षोडशी कला।
39. केन पुन गोंपजाति-कुमारिकाभि दुग्धविक्रयकुरीति व्यंवस्थापिता
40. विग्रहः इति साधुः पाठः।
41. सारं = जलं विपिनश्च।

---

* तुलनीयः, रसिकप्रिया—१४-२०
† „ „ १४-२१
‡ „ „ १४-२२

(अपिच) ।

स्वर्णं तनुर्दहति चाल्पश पति ह्यानं
वृद्धिं सुधानिधिरगन्धि च बन्धुजीवम् ।
दासोऽपि कोविदकुमार[42] हरिर्बभूव
राधा क्व कोपमकरोत्तदहो कुमारी ॥२६॥*

(अथ) श्रीकृष्ण-रौद्ररस-वर्णनम् ।

संमर्द्य मारित[43] इतः कलहो वियोगो-
प्युन्मज्य मानहतभीरपि पीडयित्वा
सर्वानुरागसुभगे ननु राधिकायै
दत्ते विलुण्ठ्य सममानि च सर्वसौख्यम् ॥२७॥†

(अपिच) ।

क्षित्वा तथा कपटता-[44]मतिकृत्य चेतो
ज्ञातं मयेति निरवर्त्ति मतिः पराख्यः(भ्यः?) ।
चित्तं रतेर्जित[45]-मनङ्गमनो ममन्थे
प्यानायि किं मनसि किं प्रतिरोषिता तत् ॥२८॥‡

---

42. कोविदकुमार इति सम्बोधने ; चतुरकृष्ण इत्यर्थः ।
43. कलहस्तावत्तया संपीड्य हत इत्यर्थः ।
44. अतिकृत्य = निर्जित्य ।
45. रतेरपि मानसं जितमिति भावः ।

---

* तुलनीयः, रसिकप्रिया—१४-२२
† „ „ १४-२३
‡ „ „ १४-२३

अथ वीररस-लक्षणम् ।

प्रसङ्गं प्राप्य गाम्भीर्यमौदार्यं तत्र वर्ण्यते ।
गौरवर्णाङ्ग उत्साहे तत्र वीररसो भवेत् ॥२९॥*

(अथ) राधिका-वीररस-वर्णनम् ।

दन्ती गतिस्तनुरुचिस्तुरगो रथोऽत्र
हारोहि भाव इह चञ्चलपत्तिराजः ।
मन्दो हसोप्यसिरुरोजयुगं भेटोयुच्(क्?)
श्लेषोऽभवत् प्रतिभटो नखजालभल्लम् ॥३०॥†

(अपिच) ।

तूणस्त्रपान्वितकुलस्थितिरेव चापो
भ्रू युग्ममुत्तमशरो हि विशालनेत्रम् ।
नीत्वाद्य साहसम(स?)हायमजं[46] जिगाय
प्रेमा पिधाय कवचं रतिसङ्गरे सा ॥३१॥§

(अथ) श्रीकृष्ण वीररस-वर्णनम् ।

यादृग् व्यदारि(हि?)वकोपि[47] यथोद्धृथोऽ(घः)[48]
सम्पातितावपि यथाच्युत केशिकंसौ ।

---

46. साहसमहाय(?) = सन्दिग्धः पाठः ।
47. Lacuna. व्यदारीत्यनन्तरं हीति योज्यम्. सन्दिग्धः पाठः ।
48. Lacuna. घः इति वर्णच्युतिः ।

---

* तुलनीयः, रसिकप्रिया—१४-२४
† ,, ,, १४-२५
§ ,, ,, १४-२५

प्राणा यथा त्वपहृता[49] ननु पुतनायाः
नीत्वा यथा हि निरसारि च कालियोऽपि ॥३२॥*

(अपिच)।

इन्द्रः कुतोऽपि विमदो न जितः कुतोऽपि[50]
स त्वं जित[51](:?) कथमितो भवितासि कृष्ण।
कामो निहन्ति च वृथा व्रजभू-कुमारी-
स्तादृक् कदा त्वमिह घोर [52]हनिष्यसीमम् ॥३३॥†

(अथ) भयानकरस-लक्षणम्।

यस्यालोकाच्चु(च्छु?)ते[53]श्चातिभीतिः समुपजायते।
स्यात्तस्य वर्णने[54] श्यामतनुरेष भयानकः ॥३४॥‡

(अथ) राधिका-भयानकरस-वर्णनम्।

सुमण्ड्य[55] भूमण्डलमब्द[56] उत्थितो
द्यु मण्डलं व्याप्य विमण्ड्य वर्धते।

---

49. यथा तु प्राणा अपहृता इत्यन्वयः।
50. कुतोऽपि न जितः, अपराजितस्त्वमिति भावः।
51. जितः इति साधुः पाठः।
52. कदा तु त्वं व्रजकुमारीघातिनमिमं कामं हनिष्यसीति भावः।
53. यस्यालोकाच्छ्रुतेश्चेति साधुः पाठः।
54. तस्य वर्णने एष श्यामतनु र्भयानकः स्यात्।
55. शोभनं यथा तथा मण्डयित्वा।
56. अब्दः = मेघः।

* तुलनीयः, रसिकप्रिया—१४-२६
† ” ” १४-२६
‡ ” ” १४-२७

स्वनेद्रु घटाब्दस्य[57] मरुद्विघट्टनात्-
त्रुटेन्न घोषस्य घटा त्रुटत्यपि ॥२५॥*

चलां[58] दशाशासु विलोक्य कामिनी
प्रियस्य कण्ठे हि तथा ससञ्ज सा ।
यथार्जुनं प्राप्य महेन्द्रकाननं
दवाश्रयाशः परिवेष्टतेऽञ्जसा[59] ॥२६॥†

(अथ) श्रीकृष्ण-भयानक-रसवर्णनम् ।

स्निग्धं भवेत् क्रुधि वचो विषतो[60]-ऽधिकं यो
द्राक्षाशनः[61] प्रबलपित्तजनः स वेद ।
योग्योऽधुना त्वमभवोऽच्युत दुःखदानेऽ-
मुष्या स्त्रपाद्य [62]हृदये त्वभिलाषि नेत्रम् ॥२७॥‡

---

57. अब्दस्य = मेघस्य ।

58. चलां = चपलां विद्युतम् ।

59. अञ्जसा—अव्ययपदं, शीघ्रमित्यर्थः ।

60. क्रुधि सिद्धं वचो विषतोप्यधिकं भवेदित्यर्थः ।

61. यथा पित्ताधिक्ये द्राक्षाभक्षणमधिकं पित्तप्राबल्याय भवति, तथेति भावः ।

62. हृदयेऽस्यास्त्रपा, किन्तु नेत्रयोरभिलाष इत्यर्थः ।

---

* तुलनीयः, रसिकप्रिया—१४-२८

† „ „ १४-२८

‡ „ „ १४-२९

( अपिच )।

भूत्वा ऋजुस्त्वमासि माननशिक्षणाया
यातोऽवदत सरलवाग्भिरसावृजुर्माम्[63]
एतां किमेमि[64] कलय दूरत एत्य गुप्तो[65](?)
मन्येऽतनूद्यतधनुर्न्निदधे[66] भ्रुवौ सा ॥३८॥*

अथ बीभत्सरस-लक्षणम् ।

निन्दामयो हि बीभत्सरसो नीलाभविग्रहः ।
अस्य श्रवणदृष्टिभ्यामौदास्यं[67] हृदि जायते ॥३९॥†

(अथ) राधिका-बीभत्सरस-वर्णनम् ।

मातः(तुः?) पलं लगति ते मधुरं मुखेऽपि
नो वा घृणास्ति रुधिरञ्च पितुः पिवन्त्याः ।
न भ्रातृकण्ठतट[68]-कर्त्तनतो व्यथास्ति
कीदृक् तवैव हृदयं हृषिता यदुक्त्या[69] ॥४०॥‡

---

63. ऋजुरसौ सरलवाग्भिरवदत् किमित्युह्यः ।
64. एतामेतादृशीं विरक्तां किं कथमेमि साधयामीत्यर्थः ।
65. अवगूढशरीरः ।
66. उद्यतञ्च तत् धनुश्चेति, अतनोः कामस्योद्यतधनुरित्यन्वयः ।
67. श्रवणदृष्टिभ्यां = दर्शनश्रवणाभ्याम् ।
68. भ्रातुः कण्ठच्छेदनादित्यर्थः ।
69. यदुक्त्या = यत्कथनेन त्वं हृषिता हृष्टा भवसीत्यर्थः ।

---

* तुलनीयः, रसिकप्रिया—१४-२९
† „ „ १४-३०
‡ „ „ १४-३१

(अपिच)।

साक्षाद् यदा सखि यदैव भवेत्तदेवं
नित्यं करोषि शपथं नहि तृप्यसेऽपि।
किं प्रेतभूतरजनीचर-कामिनीनां
कन्यासि कृष्णशपथस्तव कास्ति[70] जातिः ॥४१॥*

(अथ) श्रीकृष्णबीभत्सरस-वर्णनम्।

यस्या गृहं घ(घुण?)नघुण्टं[71] त्रुटितञ्च झिल्ली-
[72]ह्य ष्ठी(भृङ्गी?) द्र(द्रू?)णाहि[73]-चयधूमजधूलियुक्त.।
कण्टकच्चारुतृणतल्पतलञ्च पूति-
गन्धैर्युतं समभिलष्यसि तामपि त्वम् ॥४२॥†

(अपिच)।

राज्यर्धमन्धतमसं कुलटा कुरूपा[74]
शक्नोषि वक्तुमुदितं [75]न महाकुलोऽसि।
पश्चाद्गृहस्य[76] किमु दारुगृहे विशेस्त्वं
नोगेहिनीं[77] घृणयसीदृशमेतुमीश ॥४३॥‡

---

70. एतासु प्रेतादिजातिषु मध्ये त्वं किंजातीयासि, तद्वदेति भावः।

71. घुणैः काष्ठकृमिभि घुण्ट्यते परिवृत्यत इति घुणघुण्टः।

72-73. झिल्ली झिल्लीका, भृङ्गी अतिविषा, द्रुणः वृश्चिकः, अहिः सर्पस्तेषां चयः; धूमजः मेघः, धूलिः, तै युक्तम्।

74. कुश्रीका निन्दितवसनधारणात्।

75. महाकुलासि अत्यन्ताकुलासि अत उदितं वक्तुं नार्हसीति भावः।

76. गृहस्य पश्चाद्भागे स्थितस्यान्धकारगृहस्य।

77. नोगेहिनी = नो अगेहिनीं परस्त्रियम्।

---

* तुलनीयः, रसिकप्रिया—१४-३१

† ,, ,, १४-३२

‡ ,, ,, १४-३२

अथाद्‌भुतरस-लक्षणम् ।

दृष्ट्वा श्रुत्वा यदाश्चर्य्यं भवेत् सोऽद्‌भुतको रसः ।
विलासनिधिरप्येष पीतवर्णवपु र्मतः ॥४४॥*

(अथ) राधिकाद्‌भुतरस-वर्णनम् ।

बाल्यं तवैव तु वयस्तरुणा च दीप्तिः
प्रामाणिकी मतिरहो लघुवर्णवाणी ।
हृत् कामलामल-रोजननः[78] कठोरो
जात्याबला[79] तु बलवोर [80]सुबन्धकारी(?) ॥४५॥†

(अपिच) ।

दृष्टिश्चला हृदचलं ननु सन् स्वभावो
भावस्त्वसाधुरिह पुष्पधनुः कथानाम् ।
राधा भ्रमेत्तु दधिविक्रय एव नेतॄन्[81]
क्रीणाति चाद्‌भुतरसैः परिपूरितासौ ॥४६॥‡

---

78. उरोजननः = स्तनः ।
79. जात्याबला स्त्री ।
80. वीरजनबन्धनकारिणी (?)
81. नेतॄन् = दधिक्रेतॄन् ।

---

* तुलनीयः, रसिकप्रिया—१४-३३
† ,, ,, १४-३४
‡ ,, ,, १४-३४

अन्यच्च ।

कन्या व्रजस्य दधती शुकसारिकां सा
निर्वाह्य पाठयति कोकक-[82]कारिकाञ्च ।
[83]गौरी तथाप्यचतुरा भ्रमतीव बाला
द्रुत्यैत्य[84] पश्यति सुवीर विचोर्य भूयः ॥४७॥*

(अपिच)

तुभ्यं शपेऽद्भुतमिदं भृकुटी धनुष्या-
कृष्यागुणे[85] कटुकटाक्षशराणि यच्च ।
नै ष्यमिष्ट[86] तवचित्तमदृष्टमेषा
पृष्ठं प्रदाय तु[87] निहन्ति वृथेह[88] न स्यात् ॥४८॥†

(अथ) श्रीकृष्णाद्भुत-रस-वर्णनम् ।

चौ(रो?)[89] नवोद्धृतपयोमधुदध्न[90] एष
ना दृश्यते हृदपि चोरति दृश्यमानः ।
अन्यत् पुराणपुरुषा निखिले पुराणे
प्राहुः पुरातनमिमं पुरुषं किमर्थम् ॥४९॥‡

---

82. कामशास्त्रस्य कारिकाम् ।
83. अष्टवर्षा भवेद् गौरी ; बुद्धशक्तिविशेष इति हेमचन्द्रः ।
84. क्षिप्रगत्या एत्य ।
85. अगुणे [illegible] कटाक्षधनुषि ।
86. इष्ट इति सम्बोधने, प्रिय इत्यर्थः ।
87. पृष्ठं परावृत्य निहन्तीति भावः ।
88. लक्ष्यं कदापि व्यर्थं न भवतीत्यर्थः ।
89. Lacuna. 'रो' इति योज्यम् ।
90. नवोद्धृतं नवनीतं, पयो दुग्धं, मधु, दधि तेषामेकशेषस्तस्य (!)

---

* तुलनीयः, रसिकप्रिया—१४-३५
† " " १४-३५
‡ " " १४-३६

(अपिच)

दृष्ट्वा मुहुः सुमतयः सकलाः समेता
गीर्वाणयोषित इदन्तु विचारयन्ति।
गोपीगतिं[91] स्वगतिविस्मृदवेक्ष्य यः किं
कृत्वा ददात्यगतये परमां गतिं स ॥५०॥*

अथ स(श?)मरस-लक्षणम्।

.. .. ..[92] म्लानं भूत्वैकस्थान आवसेत्।
यत् स एव कविश्रेष्ठैरुक्तो स(श?)मरसो बुधैः ॥५१॥†

(अथ) राधिका स(श?)मरस-वर्णनम्।

तादृक् पश्यति नाम्बुजं न कलयत्यानन्दकत्वं विधोः
कामोक्तिश्रुतिकृन्न[93] चाभिलषति द्रव्यं[94] त्रिधामोत्तमम्[95]।
यावत्त्वामगमद्विलोक्य किमपि द्रष्टुं न चास्या रुचि-
स्त्यक्ता देह[96]-मनीक्षणे किमपि नो कृष्णेक्षणं यच्छसि ॥५२॥‡

---

91. योऽसौ हृदयचौरो नन्दनन्दनः गोपीनां गतिं म[illegible] स्वगतिविस्मृत् स्वगमन-विस्मृतो निजोपायविस्मृतो वा भवति, स तावत् केनोपायेन गतिहीनेभ्यः पापिभ्यः परमां गतिं वितरतीति [illegible]शयः।

92. Lacuna. "हृद्विषयपरि"म्लान, एतावद् अध्याहार्यम्।

93. नचेयं साधारणकामिनीव कामकथालोचनपरा।

94. Lacuna. षड्वर्णच्युति स्तत्र तावत् "भिलषति द्रव्य"मिति षडक्षराणि योज्यानि पादपूरणार्थम्।

95. त्रयाणां धाम्नामुत्तमं द्रव्यमित्याशयः।

96. अनीक्षणे तवादर्शने देहं त्यक्ता भविष्यतीत्यर्थः।

---

* तुलनीयः, रसिकप्रिया—१४-३६

† ,, ,, १४-३७

‡ ,, ,, १४-३८

(अथ) श्रीकृष्ण शम(रस?)-वर्णनम् ।

[97].. .. .. मत्ति गोस्तनीं[98]
नवोद्धृतैः सार्धमपीष्टता च्युता ।
अयं नवेक्षुं मधु वीक्षते तथा
गता प्रति त्वामपहाय गौरवम् ॥५३॥*

(अपिच)

तवाधरस्यैव रसं लवात्म...[99]
[100]............मगान्निपीय सः ।
अघ(र?)क्षदुत्थाप्य ततः प्रभृत्ययं
सुधासमेतं वसुधासुमाधुरम् ॥५४॥†

अन्यच्च

कालेन यत्र समरोऽस्ति हि दैत्यमर्त्या
[101]जीवा जलस्थलभवाश्च निपत्य सन्ति ।
सर्वे पतन्ति हि मृतास्त्वमराजराजा-[102]
नन्ता [103]निरैतुमिह वेत्यमरः स एव ॥५५॥‡

---

97. Lacuna. सप्ताक्षरच्युतिः, "न दाडिमं चामृत" इति पादपूरणार्थं योज्यम् ; रसिकप्रियायां तु 'खाटिक' (खर्जूर)मिति पाठः ।

98. गोस्तनी = द्राक्षा ।

99. Lacuna. एकाक्षरच्युतिः, "कमिति" योज्यम् ।

100. Lacuna. षडक्षरच्युतिः, "यदा तु सम्पूर्ण"मित्यध्याहार्य्यम् ।

101. सर्वे स्थावरजङ्गमा जीवा कालसमरे म्रियन्त इति भावः ।

102. अमरः देवः, अजरः जरारहितः, सनकादिः, अजः ब्रह्मा, अनन्तः विष्णुः, एते सर्वेऽपि कालसमरे पतन्तीत्यर्थः ।

103. निरेतुं = निर्गन्तुम् ।

---

* तुलनीयः; रसिकप्रिया—१४-३९
† " " १४-३९
‡ " " १४-४०

(अपिच)

श्रुत्वा स्वनद्रु(न्ती ?)तिमिद[104] समबोधि वेद[105]-
नादो न[106] चैष निनदण्डमरुः शिवस्य[107] ।
भाग्यैरितोऽपसर [108]चापसर स्वकीयै-
र्भ्रात भयं भ्रमिरपां भवसिन्धुमध्ये ॥५६॥*

संवर्णयन्त्विवमनेकवर्णान्
रसान्नवैतान् रसिका विचार्य ।
संरक्ष्यमानाश्च कवित्ववृत्ती-
र्बध्नन्तु धीरा हि चतुःप्रकाराः ॥५७॥†

इति श्रीमन्महाराज-रामजीवनराय-महाशयादिष्ट-श्रीमधुसूदन-कवीन्द्रविरचितायां रसचन्द्रिकायां नवरसवर्णनं नाम चतुर्दश आलोकः ॥

---

104. स्वनन्ती = शब्दायमाना रुतिं रवमनाहतध्वनिमित्यर्थः ।
105. वेदनादः वेदगानं, वेदतत्त्वं वा समबोधि ।
106. नच = न वा ।
107. शिवस्य = संहारकर्त्तुः रुद्रस्य निनदन् डमरुर्नृत्योराह्वानध्वनिरिति भावः ।
108. द्विरुक्तिः क्षिप्रतायाः ।

---

* तुलनीयः, रसिकप्रिया—१४-४०
† " " १४-४१

# रसचन्द्रिका

## ( पञ्चदश आलोकः )

अथ वृत्ति-कथनम् ।

> प्रथमे कौ(कै?)शिकी प्रोक्ता भारत्यारभटी ततः ।
> सात्विकी(त्वती?) च वुधै-र्ज्ञे या चतुर्धा काव्यवृत्तयः ॥१॥*

अथ कौ(कै?)शिकी-लक्षणम् ।

> करुणा(ण?)हास्यश्रृङ्गारा वर्ण(र्ण्य)न्ते यत्र कोविदैः ।
> सुभावाः सरला वर्णाः कौ(कै?)शिकी तत्र कथ्यते ॥२॥†

> [1]दूत्या भ्रमेच्च मिलती मिलितुं तथैका
> श्रोतुं वचोऽप्युपचरेद्व्रतमेकिका च ।
> [2]एकेक्षितुं द्रुतमतिभ्रमतीव देवी
> देवार्थदानमनुमत्य च नित्यमिच्छेत् ॥३॥§

> [3]कर्त्तव्यमस्ति किमिदं ननु कर्मरूपं
> मतकृष्णनामत इयं हसतीह मातः[4] ॥४॥‡

---

1. दूत्या भ्रमेदित्यादिना श्रृङ्गारः ।
2. एकेक्षितुमित्यादिना करुणा(णः?) ।
3. कर्त्तव्यमित्यादिना हासः ।
4. वसन्ततिलकार्धवृत्तम् ।

---

* तुलनीयः, रसिकप्रिया—१५-१
† „ „ १५-२
§ „ „ १५-३
‡ „ „ १५-३

अथ भारती-लक्षणम् ।

वीरशृङ्गारहास्यानि वर्ण्यन्ते यत्र वै रसाः ।
शुभार्थो यत्र तत्रैव भारती वृत्तिरीरिता ॥५॥*

कणं लसत्कनकपत्रसुचारुचक्र
तद्भूषिपिप्पलदलं रुचिरध्वजञ्च ।
छत्रं च शीर्षकुसुमं विरचय्य राधा
सृष्टं च केशरभवं तिलकं तु सूतः[5] ॥६॥†

सन्नासिका रुचिरमौक्तिकशब्दकारी(?)
यातोऽस्य विक्रयमजः सकृदीक्षणेन[6] ।
नेत्रं विशालमरुणो जडितो मणि र्यद्
[7]भाले स्मरो झषरथे ध्रुवमारुरोह ॥७॥§

अथ आरभटी-लक्षणम् ।

रौद्रोऽथ भयबीभत्सौ भवन्ति हि यदन्तरे ।
आरभट्याः स आरम्भो यमकञ्च पदे पदे ॥८॥‡

---

5. ध्वजचक्रछत्रसारथिवर्णनेन वीररसोत्पत्तिः ।
6. ईक्षणेनाजस्य विपणनाद् ह्रासः ।
7. भाले स्मरस्य झषरथारोहणादद्भुतरसः ।

---

* तुलनीयः, रसिकप्रिया—१५-४
† ,, ,, १५-५
§ ,, ,, १५-५
‡ ,, ,, १५-६

घोरं रौति घनो घनो घनरसै[8] र्भासोत्[9] (ज्?)ज्वलत्कज्व(ज्ज?)लः ।
स्फीतो भ्राम्यति खे करीव[10] च पुरो लब्धा नभः[11] पञ्चमीम् ।
भीतिं भीरुपैति विस्फुरति यत् सत्यं समन्तात्तडिज्
जानेऽजेन विना व्रजोपरि परं कालाङ्गना[12] नृत्यति ॥९॥*

अथ सात्त्विकी(त्वती?)-लक्षणम् ।

समाना यत्र वर्ण्यन्ते रौद्रवीरशमाद्भुताः ।
श्रुत्वा हि बुध्यते भावः सात्त्विकी(त्वती?) भणितात्र
च(सा?) ॥१०॥†

कामस्य लक्षकविधां[13] ज्वलयाति मूढे
नो वर्धयेह हृदये बृहदग्निमेवम् ।
राधाजयोर्मुदधिका[14] सकलात्तु[15] जाने
प्रीतिरते[16] रतिपतेरणुवीक्षितेव ॥११॥‡

---

8. घनो मेघः, घनः सान्द्रः, घनरसैरन्धतमोभिरित्यर्थः । घनरसमन्धं क्षीरं घृतममृतं जीवनं भुवनमिति रत्नकोषः ।

9. भासोज्ज्वलदिति साधुः पाठः ।

10. कृष्णवर्णगज इव ।

11. नभसः श्रावणमासस्य पञ्चमीतिथिः । कृष्णा पञ्चमीति यावत् ।

12. कालाङ्गना = कालस्य संहारिणी शक्तिः, घोरमित्यादिना रौद्ररसः, भीत्युत्पादनेन भयानकः, कालाङ्गनानृत्येन च बीभत्सो रसः ।

13. कामस्य लक्षसंख्यकामभिलाषपरम्परां मा सन्दीपयेति भावः ।

14. मुद् = प्रीतिः रति र्वा ।

15. सकलादधिका = सर्वेभ्योऽप्युत्तमा ।

16. रतिरतिपत्योः प्रीतिस्तु न तथा विपुलेति भावः ।

---

* तुलनीयः, रसिकप्रिया—१५-७

† „ „ १५-८

‡ „ „ १५-९

[17]म(य?)न्मध्यभेदनमुपैति न वा भवानी
बालेव भारतगवागपि(?)[18] भारते च ।
एकासुधी(?)[19]-गमनमानसयोस्तयोः (?)
संवीक्षितुं तनुयुगं युगलं यथाक्ष्णोः ॥१२॥*

[20]अवर्ण्यैवं विधानेन काव्यं नवरसात्मकम् ।
मनो दास्यसि नो तत्र शृणु पञ्चविधारसान्[21] ॥१३॥†

इति श्रीमन्महाराज-रामजीवनराय-महाशयादिष्ट-श्रीमधुसूदन-कवीन्द्र-विरचितायां रसचन्द्रिकायां चतुर्विधकवित्ववृत्तिवर्णनं नाम पञ्चदशः आलोकः ।

---

17. यन्मध्येति साधुः पाठः ।

18. सन्दिग्धः पाठः । भारत्याः वचनपरिपाटी अपि इमां प्रीतिं पृथक्कर्तुं न समर्थेति "रसिकप्रिया ।"

19. असु च धी च, प्राणैर्धिया च, गमनेन मनसा च नौ एक एव गतिरिति भावः ।

20. वर्णनमकृत्वा ।

21. अरसान् = रसाभासान्? ।

---

* तुलनीयः, रसिकप्रिया—१५-९

† " " १५-१०

# रसचन्द्रिका

## ( षोड़श आलोकः )

अथारस-लक्षणम् ।

कथिताः प्रत्यनीकश्च नीरसो विरसस्तथा ।
दुःसन्धान स्तथा पात्रदुष्टः पञ्चविधारसाः ॥१॥*

यत्र शृङ्गार-बीभत्स-भी-वीर-करुणोग्रकाः ।
वर्ण्यन्ते मिलिता स्तत्र प्रत्यनीकरसो भवेत् ॥२॥†

स्मित्वोक्ते [1]सरला(?) हसन्त्यपसरैल्लोको हि [2]लज्जोज्झिते
वाक् चाले[3] जननिन्दितं चलति हृन्नीतौ(ते?)[4] स्मरो जाग्रति ।
आसीन्मे हृदि यत्त्वदुक्तमपि हृज् ज्ञात्वेदमुत्साहि न
न्यस्ते स्वल्पमजेऽक्षिण संकलयतेऽङ्गुल्याः[5] प्रसारे जनः ॥३॥‡

---

1. सरला हसन्ति, जना इति शेषः । सकला इति वा पाठः ।
2. लज्जोज्झिते = त्यक्तलज्जे सतीत्यर्थः ।
3. आले = अयि सखि, इति सम्बोधने । जननिन्दितं भावे क्तः, लोकनिन्देत्यर्थः ।
4. हृदि मनसि नीतौ(?) आनयन इत्यर्थः । नीते इति साधुः पाठः । जागृ, क्ष, जाग्रति ।
5. अङ्गुलिं दर्शयित्वा निन्दतीति भावः । स्मित्वोक्त इत्यादिना शृङ्गारः, अङ्गुलि-प्रसारणादिना बीभत्सः, तयो विरोधात् प्रत्यनीकत्वम् ।

---

* तुलनीयः, रसिकप्रिया—१६-१
† ,, ,, १६-२
‡ ,, ,, १६-३

अथ नीरस-लक्षणम् ।

सुखतो[6] दम्पती यत्र मिलित्वा तिष्ठतः सदा ।
आधाय कपटाच्चित्तमेवं रीतिस्तु नीरसः ॥४॥*

चा[illegible]ध्यब्धिविगाहितातिचलिता धीर्यस्य दुःखं हसं[7]
मह्यं यश्च ददौ द्वयं कलयति प्रेम प्रहेली ततः ।
ज्ञातं सा मिलिता मुखेन रुचितं नैतत् सगर्वं हृदे ।
श्रुत्वाद्यापि नयद्रुतं[8] तदचलं दृष्ट्वा सपत्नी सखी ॥५॥†

अथ विरस-लक्षणम् ।

यत्र शोकस्य मध्ये तु सम्भोगं वर्णयन्ति हि ।
कवयः केचिदुल्लासात्तत्रैव विरसो भवेत् ॥६॥§

स्नानाशनत्यजन[9]-पानसुगानबोधाः
संविस्मृताः कठिनपीठमिवासवोऽपि[10] ।
मुञ्चेतमाग्रहमिवा(मां?)मवलोच्य[11] बालां
सौख्येऽखिलेऽ रुचिरहो भविता तथापि ॥७॥‡

---

6. का[illegible]सुखपूर्वकम् ।
7. यश्च मह्यं दुःखं हसं च द्वयं ददावित्यन्वयः ।
8. यत् न रुतम् शब्दितं नाकर्णितमित्यर्थः । वहिः प्रेम्णो हृदि च कापट्यान् नीरसत्वम ।
9. त्यजनं = दानम् ।
10. असवः प्राणाः कठिनपीठमिव कठिनकाष्ठासनमिव मृतवदित्यर्थः ।
11. इमां बालामवलोच्य पर्यालोच्य विविच्य वा ।

---

* तुलनीयः, रसिकप्रिया—१६-४
† ,, ,, १६-५
§ ,, ,, १६-६
‡ ,, ,, १६-७

यद्वासने(?) दृशि वृथा फलितं हि पत्रं
वाचः श्रुता हि मधुराः क्व च नास्ति हर्षः।
सा च प्रतीष्ट[12]-भवत् त्रुटितेष्टभावा
सल्लोहिता कथमदो हृदि शोकवह्निः ॥८॥*

अथ दुःसन्धानरस-लक्षणम्।

एको यत्रानुकूलः स्याद् द्वितीयः प्रतिकूलकः।
दुःसन्धानरस स्तत्र समूलः परिशोभते ॥९॥†

[13]दधि प्रयच्छेति ऋणं प्रदेयं
दानं किमाक्रीय च भुक्तमन्यत्।
दानं विनागा स्तदगा गता नो
गता गमिष्यामि पुन गृंहाय ॥१०॥‡

---

12. सा च इष्टं प्रति त्रुटितेष्टभावेत्यन्वयः। नायिकायाः शोके नायकस्य शृङ्गारोदयाद् विरसता।

13. नायकनायिकयोर्मिथः संलापः—
नायकः — दधि प्रयच्छ
नायिका — किं ऋणं प्रदेयम्?
नायकः — (यदा) आक्रीय भुक्तं, तदा अन्यत् दानं किम्?
नायिका — दानं विना? (विना दानं किं करिष्यसीति भावः)
नायकः — तद् अगाः, अगाः (एव)
नायिका — (यदि) नो गता; तर्हि पुन गृंहाय गमिष्यामीति भावः।

---

* तुलनीयः, रसिकप्रिया—१६-७
† „ „ १६-८
‡ „ „ १६-९

[14]वैरं कृतं गव्यकृते हितोऽभूः
कदाथ सम्यग् वरमेतदस्तु ।
गव्यञ्च विक्रेष्यसि वैरकृन्नो
विक्रीयते वा न विकीर्य देयम् ॥११॥*

अथ पात्रदुष्ट-लक्षणम् ।

यादृग् यत्रोचितं न स्यात् कृत्वापुष्टं तथा तु यत् ।
वर्ण्यते त्वविचारेण पात्रदुष्टो रसो हि सः ॥१२॥†

मान्या कृपाण उपधेः[15] प्रियता विधात्री
गङ्गाम्भसा हि सदृशी तनुमाश्रितानाम् ।
स्वार्थास्पदं परमार्थकराजधानी
ख्यातो(ता?) [16]स्मरोपकथया मम राज्ञि लोके ॥१३॥‡

---

14. नायकः — गव्यकृते वैरं कृतं (त्वया)
नायिका — हितोऽभूः । अथ कदा सम्यग् ( अवैरमासीत् ) एतद् वरम् अस्तु ।
नायकः — वैरकृत् ( वैरं कृत्वा ) न गव्यम् विक्रेष्यसि ।
नायिका — न विक्रीयते चेत्तदा विकीर्य न देयं (मयेति शेषः)
अत्र नायकस्यानुकूल्येन नायिकायाश्च [illegible]कूल[illegible]द् दुःसन्धानत्वम् ।

15. उपधे व्याजस्य कृपाणः ।

16. Lacuna. ख्याता ?

---

* तुलनीयः, रसिकप्रिया—१६-९
† ” ” १६-१०
‡ ” ” १६-११

सद्गुगानधामसुखदा शुभवर्णयुक्ता-
नीतासुधा[17] विरचिताखिलचातुरीता ।
[18]गौरी-गिरोस्त्रपयिनी मतिमूढमोहि-(?)
विशापिनी दृगपि(?)गी[19]-र्गदितो (विषो?)[20] भोः ॥१४॥*

बीभत्से(ऽ)पि च शृङ्गारे करुणा(ण?)हासयोस्तथा ।
वीरे भये च सततं वर्णने वैरमुच्यते ॥१५॥†

भयं जायेत बीभत्साद्धास्यं शृङ्गारतस्तथा ।
अद्भुतो जायते वीराद्रौद्रतः करुणा(णो?) भवेत् ॥१६॥§

रसा एवंविधं प्रोक्ता विचार्याप्यरसास्तथा ।
[21]तदुद्धरन्तु कवयो भ्रान्तं यत्र तु वर्णने ॥१७॥‡

---

17. आनीतापादिता सुधामृतरसो यया सा ।
18. गौर्याः गिरश्च लज्जादायिनी ।
19. गी वाणी ।
20. Lacuna. द्विवर्णच्युतिः, 'विषो' इति पूरणीयम् ।
21. उद्धरन्तु = संशोध्य गृह्णन्तु ।

---

* तुलनीयः, रसिकप्रिया—१६-११
† „ „ १६-१२
§ „ „ १६-१३
‡ „ „ १६-१४

दृश्यते रसिको दीनो यथा नित्यं प्रियां विना।
रसचन्द्रिकया हीनाः सर्वे सत्कवयस्तथा ॥१८॥*

वर्धेत पाठात्प्रतिबोध उच्चै [22]जा(र्जा?)नाति सर्वस्य रसस्य रीतिम्।
[23]स्वार्थञ्च विन्देत्[24] परमार्थमेवं प्रीत्या तथास्या रसचन्द्रिकायाः ॥१९॥†

इति श्रीमन्महाराजरामजीवनराय-महाशयादिष्ट-श्रीमधुसूदन-कवीन्द्र-विरचितायां रसचन्द्रिकायां रसारसवर्णनं नाम षोड्ष(श?)[25] आलोकः।

समाप्तश्चायं ग्रन्थः ॥

---

22. Lacuna. उच्चैर्जानाति।
23. स्वार्थं = काव्यपाठसमकालभव विगलितवेद्यान्तरब्रह्मानन्द-सहोदर-रसास्वादम्।
24. आनन्द-चिन्मय-रसास्वादेन नित्यलीलाप्रत्यक्षसमुद्भूतः शाश्वतिकः परमार्थः।
25. षोडश इति साधुः पाठः।

---

* तुलनीयः, रसिकप्रिया—१६-१५
† ,, ,, १६-१६

शाके[26] भूधरभूरसेन्दुगणिते मासे च पक्षे शुचौ[27]
पञ्चम्यां रसचन्द्रिकां द्रुतरसावेस(श?)[28]-प्रकाशामसौ ।
[29]सद्वाणी-कमनीयतातुलमनीषित्वावनीसद्ध्वनि-
श्रेणि(णी?)-श्रीयुतरामजीवननृपादेशात् कवीन्द्रोऽकृत ॥२०॥

*

श्रीदुर्गा सततं पातु [30]पुस्तकादेशकं चिरम् ।
[31]जगती जयति क्षेमाद् यस्यैव जगतीपतेः ॥२१॥

---

26. भूधरः = सप्त अष्ट वा ( कविकल्पलता ) ।
भूः = एकः ।
रसः = षट् ।
इन्दुः = एकः । अङ्कस्य वामा गतिः, १६१७, १६१८ वा शाके ।

27. शुचौ मासे = वैशाखे मासे
शुचौ पक्षे = शुक्लपक्षे ।

28. Lacuna.

29. (a) सद्वाणी = मधुरवाक्
(b) कमनीयता = सौन्दर्यम्
(c) अतुलमनीषित्वम् = अतुलनीयमहानुभवता
(d) अवनीसद्ध्वनिः = अवन्यां पृथिव्यां, सत् शोभनो, वर्तमानो, सदिति वा ध्वनिः, सज्जन इति ख्यातिः ; प्रसिद्धसङ्गीतध्वनि र्वा, तेषां श्रेणी पंक्तिः, एवम्भूतो यः श्रीयुतरामजीवन-नृप स्तस्य आदेशात् ।

30. ग्रन्थ निर्माणप्रवर्त्तयितारम् ।

31. "जगती जयती"त्यनेन लेखकप्रयोजकयोः समकालता ।

शाके[32] शैल-विधु-क्षौणीनाथे नभसि [33]मासके
पुस्तकं भूपतेरेत[34]-ल्लिलेख रघुनन्दनः ॥२२॥

॥ श्रीकृष्णः पातु ॥

---

32. शैलः सप्त अष्ट वा । विधुरेकः । क्षौणीनाथः षोडशः ।

33. नभसि = श्रावणे ।

34. भूपतेः राज्ञो रामजीवनस्य कृते एतत् पुस्तकं लिलेख । इति शम् ॥

'भारते' 'पश्चिमे वङ्गे' 'वर्धमाने' च मण्डले ।
'अकालपौष'-वास्तव्यो वात्स्यो 'हरिपदो' द्विजः ॥
'सतीदेव्यां' सुतं लेभे 'शिवनारायणा'भिधम् ।
'काश्या'मधीतविद्यः स सेवते 'विश्वभारतीम्' ॥
तेन कृता 'चकोराख्या' टिप्पणी 'शोध'संस्कृता ।
रसिकानां मुदे भूयाद् 'रसचन्द्रिकयो'ल्लसा ॥

॥ श्रीशः पातु ॥

—※—

# शुद्धिपत्रम्

( Errata )

| अशुद्धम् (incorrect) | शुद्धम् (correct) | पृष्ठा (page) | पंक्तिः (line) | |
|---|---|---|---|---|
| Rasa concept. | Rasa-concept, | xxi | 14 | |
| end | and | ,, | 15 | |
| lue | due | xxiv | 31 | |
| Keśavadāśa. | Keśavadāśa, | xxv | 1 | |
| It | it | ,, | 2 | |
| °sindhū | °sindhu | xxvii | 25 | |
| heroine | beloved | xxxii | 7 | |
| tāmbula | tāmbūla | xxxix | 17 | |
| प्रथमालाकः | प्रथमालोकः | क | १ | |
| वाह्य | बाह्य | घ | ३, ६ | |
| व्यधि | व्याधि | छ | ४ | |
| महाराजरय | महाराजस्य | २ | | f. n. 8 |
| देविदास | दुर्गादास | ,, | | ,, 11 |
| वहवः | बहवः | ४ | | ,, 23 |
| आत्मजा | आत्मजाः | ५ | | ,, 33 |
| ०नाठ्या | ०नाट्या | ६ | | ,, 46 |
| ०नाटया | ०नाट्या | ,, | | ,, 48 |
| सम्वन्ध | सन्बन्ध | ८ | | ,, 61 |
| वलेन | बलेन | ,, | | ,, 63 |
| ०द्धत | ०द्धुत | ९ | ५ | |
| सम्वोधने | सम्बोधने | १० | | ,, 78 |
| अष्टधाः | अष्टधा :— | १२ | | ,, 2 |
| तुल्लाटयन्ती | तूल्लाटयन्ती | १४ | ७ | |
| बैपरीत्येन | वैपरीत्येन | ,, | | ,, 14 |
| वाह्या | बाह्या | १५ | २ | |
| सम्वोधने | सम्बोधने | ,, | | ,, 17 |
| तावद | तावद् | १९ | | ,, 1 |
| ब्रूत | ब्रूत | २० | | ,, 2 |
| वृहद् | बृहद् | २२ | २ | |
| भवन् | भवेन् | ,, | ९ | |
| ्जिसिरी | राजिसिरी | ,, | | ,, 14 |

